# Shri Siddhantha Shikhamani

## Parayana text

**Written by : Sri Shivayogi Shivacarya**

Script : Sanskrit /संस्कृत





Concept & Inspiration By : Sri Kashi Jagadguruji




Publication of

Shaiva Bharathi Shodha Pratishthana

Shri Kashi Peeth

# D35/77, Jangamawadimath,
Jangamawadi, Varanasi 221 001



# Shri Siddhantha Shikhamani

## Parayana text

**Written by : Sri Shivayogi Shivacarya**

Script : Sanskrit /संस्कृत







Concept & Inspiration By : Sri Kashi Jagadguruji

# सिद्धान्तशिखामणिः

## -एकं दार्शनिकं काव्यम्

महामहोपाध्यायः डा. समुद्राल लक्ष्मणय्य

शैवभारती शोध प्रतिष्ठानम्
वाराणसी
२०१५

**विषयसूची**

## *वक्तव्यं किंचित्*

मन्दिराणां मठानां च दृढतरः सम्बन्धः विलोक्यते। सुप्रसिद्धस्य तिरुमल तिरुपति देवस्थानस्य याजमान्ये प्रचाल्यमानायां प्राच्यकलाशालायां मम विद्याभ्यासः प्रारब्धः। मठाधिपतीनामादेशेन प्रोत्साहेन च मदीयः रचनाव्यासङ्गः प्रावर्तत।

अनयोः द्वयोरपि व्यवस्थयोः प्रातिनिध्यं वहतोः द्वयोः महोन्नतव्यक्त्योः छत्रच्छायायां प्रेमादरपूर्णवीक्षणानां पात्रं भूत्वा मम जीवितं साफल्यं प्राप। अनिर्वाच्या काऽपि मधुरानुभूतिः मम समजनि।

तयोः प्रथमतया गणनीयाः मम विद्यागुरवः पूज्याः डा. समुद्राल लक्ष्मणय्य महोदयाः। ते ति.ति.देवस्थानस्य प्राच्यकलाशालायां आचार्यत्वेन, धर्मप्रचारपरिषदः कार्यदर्शित्वेन, भागवतपरिष्करणपरिषदः निर्देशकत्वेन च विविधान् कार्यक्रमान् निरवहन्। अधुना पुराणेतिहासपरिषदः विशेषाधिकारित्वं निर्वहन्ति। व्यासाश्रमसंस्थापकानां महर्षि सद्गुरु श्री मलयालस्वामिनां प्रियशिष्या इमे, तेषां यतीन्द्राणां बोधप्रचारकाः धार्मिकग्रन्थसंपादकाश्च भूत्वा आन्ध्रदेशे सर्वत्र सुप्रसिद्धा बभूवुः। तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालयेन 'वाचस्पति', 'महामहोपाध्याय' पुरस्काराभ्यां च सत्कृताः। व्याख्यानत्रयोपेते व्यासभागवतप्रचुरणे, व्याख्यानद्वयविशिष्टवाल्मीकिरामायण-परिष्करणे च सिद्धहस्ताः इमे सदा धार्मिकसाहित्यप्रचारनिरता



भवन्ति। स्वयं च पञ्चत्रिंशत् संख्याकानां संस्कृतान्ध्रग्रन्थानां निर्माणं चक्रुः।

तदनु परिगणनीयाः काशीज्ञानसिंहासनाधिपतयः, अस्मत्कुलगुरवः जगद्गुरवश्च डा.चन्द्रशेखरशिवाचार्यमहास्वामिनः। जन्मतः दाक्षिणात्या अपि एते महानुभावाः वाराणस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये संस्कृतविद्यामधिगतवन्तः। तदनु अविरलसारस्वतकृषिफलत्वेन वीरशैवधर्मप्रचारनिरतत्वेन च विख्यातिं गताः 'वेदान्ताचार्य', 'विद्यावारिधि', 'वाचस्पति' प्रभृतिभिः बहुभिरुपाधिभिः भूषिता बभूवुः। वीरशैवानां पञ्चसु पीठेषु अन्यतमस्य श्रीकाशीज्ञानसिंहासनपीठस्य आधिपत्यं लब्ध्वा जगद्गुरुस्थानं अलञ्चक्रुः। शैवभारतीशोधप्रतिष्ठानद्वारा शैवागमसाहित्यसंबन्धिनः शताधिकग्रन्थान् मुद्राप्य इमे विद्वत्तल्लजाः यतीन्द्राः विश्वविख्याता बभूवुः।

एतैः सिद्धान्तशिखामणिनामकस्य संस्कृतग्रन्थस्य प्रचारार्थं स्वीयं जीवितं सर्वात्मना समर्पितमासीत्। अयं ग्रन्थः वीरशैवसिद्धान्तबोधकः। तस्य प्रचारमेव जीवितलक्ष्यं मत्वा एते महापुरुषाः दशाब्दकालपर्यन्तं कर्णाटकराज्ये सर्वत्र पर्यटनं कृत्वा सिद्धान्तशिखामणिमाधारीकृत्य बहूनि प्रवचनानि कृतवन्तः। तानि प्रवचनान्येव 'सिद्धान्तशिखामणि प्रवचनप्रभा' इति द्वयोः संपुटयोः कर्णाटकभाषायां निबद्धानि सन्ति। तौ च संपुटौ मराठी-तेलुगु भाषानुवादाभ्यां च प्रकटितौ। सिद्धान्तशिखामणिग्रन्थः कन्नड

भाषानुवादेन सह कर्णाटके राष्ट्रे गृहे गृहे विराजितो भवतु इति सत्संकल्पेन लक्षशः ग्रन्थान् मुद्राप्य एकोत्तरशतनगरेषु ग्रन्थाविष्करणकार्यक्रमान् निर्वहन्ति। पञ्चाशत्संख्याधिकनगरेषु एतावत्पर्यन्तं अयं कार्यक्रमः निर्व्यूढो बभूव।

अपि च भारतदेशे सर्वत्र सिद्धान्तशिखामणि ग्रन्थः परिव्याप्तो भवतु इति सदाशयेन राज्याङ्गनिर्दिष्टासु पञ्चदशसु भारतीयभाषासु तस्य अनुवादमपि कर्तुं कृतनिश्चयाः बभूवुः। अद्यावधि हिन्दी, कन्नड, तेलुगु, मराठी, तमिळ, मलयाळ, गुजराती भाषासु अनुवादाः प्रकाशिताः। एतत्संवत्सारान्तात् पूर्वमेव अवशिष्टभाषानुवादाः अपि प्रकटिता भविष्यन्ति। तथैव अस्य ग्रन्थस्य विश्वव्याप्त्यर्थं आङ्गल्यां, रष्यन् भाषायां च अनुवादौ पूर्वमेव प्रकाशितौ।

एवं मूलग्रन्थमुद्रणानन्तरं ग्रन्थसंबन्धिनं अध्ययन कार्यक्रममपि स्वीकर्तुं जगद्गुरवः अभिलषन्ति। हैदराबादनगरे प्रवृत्ते सिद्धान्तशिखामणेःआन्ध्रानुवादग्रन्थस्याविष्कारणसन्दर्भे अयं विषयः पूज्यपादैः एवं प्रस्तुतः। वेदान्ते साहित्यशास्त्रे च कृतपरिश्रमैः बहुग्रन्थकर्तृभिः डा. समुद्राल लक्ष्मणार्यैः प्रथमः अध्ययनग्रन्थः संस्कृते सज्जीकर्तव्यः इति स्वामिपादानां आशयः इति। ''प्रसिद्धवेदान्तग्रन्थे सिद्धान्तशिखामणौ स्थितान् साहित्यशास्त्रांशान् संगृह्य 'सिद्धान्तशिखामणि :- एकं दार्शनिकं काव्य'मिति निरूपणीयमिति अस्माकमाशयः, तमाशयं सम्पन्नं कर्तुं उभयशास्त्रनिष्णाताः समुद्राल पण्डिताः समर्थाः। दूरवाणीद्वारा



तैस्सह अमुं विषयमुद्दिश्य संभाषितुं अवकाशं कल्पयन्तु, तैस्सह अहमेव भाषिष्ये'' इत्यवदन्। तत्संकल्पानुसारेण अनुकूले कस्मिंश्चित्सन्दर्भे जगद्गुरवः लक्ष्मणार्यैस्सह संभाषितवन्तः।

जगद्गुरुणां सदाशयं विज्ञाय मम विद्यागुरुभिः पूर्णहृदयेन तत्कार्यं अङ्गीकृतम्। ''अमेरिकादेशं प्रति जिगमिषामि आगमनानन्तरं कार्यकारी भविष्यामि'' इति तैः अभिहितम्। अङ्गीकृतं परिपालयन्तः अधुना अध्ययनकार्यक्रमं समाप्य तस्य ग्रन्थरूपं परिकल्पयामासुः। एवं मठस्यादेशः मन्दिरेण निर्व्यूढः इति वक्तुं महान्तमानन्दमनुभवामि ।

'सिद्धान्तशिखामणिः एकं दार्शनिकं काव्यम्'इति पुस्तकं सम्पन्नं कर्तुं सहायभूतान् ग्रन्थान् विषयांश्च संकलय्य समर्पयितुं सदवकाशः मया लब्धः। एवं जगद्गुरूणां विद्यागुरूणां च सेवां निर्वोढुं मम सौभाग्यं लब्धमिति, इदं च पूर्वजन्मसुकृतफलमिति मनसा भावयामि। अव्याजस्य अपूर्वस्य च गुरुदेवानां वात्सल्यस्य प्रोत्साहस्य च पात्रभूतोऽहं सदा कृतज्ञो भविष्यामति निवेदयन् विरमामि।

**– प्रतापः**

# सिद्धान्तशिखामणिः
# एकं दार्शनिकं काव्यम्

## उपक्रमः

लोके तावत् चत्वारो वेदाः सुप्रसिद्धाः। ते च अपौरुषेया इति संप्रदायः। अत एव 'श्रूयते इति श्रुतिः' इति तेषां प्रसिद्धिः।

तदनु पुराणानि विख्यातानि भवन्ति। तानि व्यासविरचितत्वेन प्रसिद्धानि -

**मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।**
**अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते ॥**

इति मत्स्यादीनि पुराणानि सुविदितानि। एतेषु पुराणेषु वेदान्तर्गतो विषय एव प्रकारान्तरेण प्रतिपादितः इति पुराणतत्त्वज्ञाः कथयन्ति। अल्पज्ञानवन्तः मन्दबुद्धयश्च वेदानवगन्तुं न प्रभवन्ति। तानुद्दिश्य वैदिकविषयान् बोधयितुं पुराणानि समुत्पन्नानि। तदुक्तं -

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।**
**बिभेत्यल्पश्रुताद्वेदः मामयं प्रह(त)रिष्यति॥** इति।

तदनु काव्यसारस्वतं विख्यातं भवति। गद्यमयं, पद्यमयं, तदुभयमयं

---

ग्रन्थस्यास्य रचनायां शैवभारती भवनेन (वाराणसी) १९९३ वत्सरे मुद्रितः मराठीभावानुवादसहितः **सिद्धान्तशिखामणि**ग्रन्थः उपयुक्तः - ग्रन्थकर्ता।



चेति काव्यं त्रिविधं भवति। प्रकारान्तरेण दृश्यकाव्यं श्रव्यकाव्यमिति काव्यविभागः द्विविधः। दृश्यकाव्येष्वपि -

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।**
**व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश॥**

इति दश भेदाः सन्ति।

एवं च वैदिकं सारस्वतं, पौराणिकं साहित्यं, काव्यवाङ्मयं चेति स्थूलतया संस्कृतवाङ्मये त्रिधा विभागः दृश्यते।

अत्र एकैकस्यापि विभागस्य वैशिष्ट्यं प्रतिपादयन् आलङ्कारिकशिरोमणिः प्रतापरुद्रीयकर्ता विद्यानाथः एवं ब्रवीति -

**यद्वेदात्प्रभुसम्मितादधिगतं शब्दप्रधानाच्चिरं**
**यच्चार्थप्रवणात्पुराणवचनादिष्टं सुहृत्सम्मितात् ।**
**कान्तासम्मितया यया सरसतामापाद्य काव्यश्रिया**
**कर्तव्ये कुतुकी बुधो विरचितस्तस्यै स्पृहां कुर्महे ॥**

इति। अर्थात् वेदः प्रभुसम्मितः शब्दप्रधानश्च। स च राजवत् 'सत्यं वद धर्मं चर' इति शास्ति। पुराणानि मित्रसम्मितानि अर्थप्रधानानि च। मित्रं 'एवं कुरु, एवं मा कुरु' इति प्रेम्णा सोदाहरणं ब्रवीति, 'रामादिवद्वर्तितव्यं, न रावणादिवत्' इत्युपदिशति। एवमेव पुराणानि कथोपकथाद्वारा धर्मं अधर्मं च उपदिशन्ति।

काव्यसारस्वतं पूर्वोक्तविभागापेक्षया अधिकतरं मनोरञ्जकं भवति। यथा वा कान्ता स्वीयं कान्तं हावभावादिभिः प्रेमपूर्वकैः

सल्लापैश्च आकृष्य कर्तव्ये सुमुखं, अकर्तव्यात् विमुखं च करोति, तथैव काव्यमपि पठितृवर्गं मनोरञ्जकैः कथाकथनप्रकारैः सालङ्कारैः सगुणैः सरसैश्च वचनैः कर्तव्योन्मुखं करोति।

एवं च काव्यरचनायाः वैशिष्ट्यं निरुपमानं भवति। यदि ग्रन्थकर्ता काव्यप्रक्रियामनुसृत्य ग्रन्थरचनां करोति तादृशी रचना सुव्याप्ता सुप्रसिद्धा च भवतीत्यत्र न संशयः। रामायणरघुवंशादि काव्यानि अत्र प्रमाणम् ।

दुर्बोधोऽपि शास्त्रविषयः यदि काव्यप्रक्रियामाश्रित्य उपदिश्यते तदा तस्य व्याप्तिः सुलभतरा भवति। कटुकौषधं बालकः स्वीकर्तुं नेच्छति। तदेवौषधं गूढतया गुडे निक्षिप्तं सत् बालकेन निर्विरोधं स्वीक्रियते। तत एव प्राचीनैः गणितायुर्वेदादि शास्त्राण्यपि काव्यप्रक्रियामाश्रित्य छन्दोबद्धया वाण्यैव निबद्धानि सन्ति। छन्दोबद्धेन वचसा प्रतिपादने संप्रदायः अपि परिरक्षितः स्यात्। छन्दोबद्धवाणी कण्ठस्थीकर्तुं सुलभा भवति। उपाध्यायात् शिष्यमुद्दिश्य गुरुशिष्यपरम्परानुसारेण विषयस्य प्रचारे छन्दोबद्धैव वाक्प्रभवति ।

ऋग्वेदमन्त्रादिष्वपि इयं परम्परा अनुसृता। अतिप्राचीने काले लिपिः नासीत्। गुरुपरम्परा एवं शिष्यपरम्परा च मौखिकोक्तिरूपेण वेदरक्षणं चक्रतुः। तदुक्तं -



**वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।**
**वेदाध्ययनसामान्यात् अधुनाऽध्ययनं यथा ॥**

इति । तथा च अध्यापनं अध्ययनं च छन्दोबद्धस्यैव वचसः सुलभतरमिति निश्चितम्।

शास्त्रेषु सर्वेष्वपि वेदान्तशास्त्रं अवगमने क्लेशावहमिति सर्वेऽपि जानन्ति। तथाऽपि वेदान्ततत्त्वं छन्दोमयेन सालङ्कारेण च वचसा सरसप्रक्रियया यद्युपदिश्यते तर्हि जनैः सानन्दं स्वीक्रियते अवबुद्ध्यते च।

एतद्रहस्यं जानन्नेव शिवयोगि शिवाचार्यः स्वकीय सिद्धान्तशिखामणिग्रन्थे शक्तिविशिष्टाद्वैततत्त्वं काव्यरचना-प्रक्रियामनुसृत्य पठितृभ्यः श्रोतृभ्यश्च सुगमं चकार। तेनेदं प्रयोजनं कथं साधितमित्यमुमंशं निरूपयितुमेव ग्रन्थोऽयमारभ्यते।

वेदमतानुयायिनः सर्वेऽपि वेदमेव सर्वस्यापि प्रमाणत्वेन अङ्गीकुर्वन्ति। लोके जनाः आस्तिकनास्तिकभेदेन द्विधा भिद्यन्ते। को नाम आस्तिकः? को वा नास्तिकः? इति प्रश्ने भगवन्तं यः विश्वसिति स आस्तिक इति, तद्भिन्नः नास्तिक इति केचित्कथयन्ति। परे तु आत्मनः अस्तित्वं ये अङ्गीकुर्वन्ति त एव आस्तिकाः इति भावयन्ति। परंतु वेदप्रामाण्यस्थापकाः वेदे यस्य विश्वासः अस्ति सः आस्तिकः इति, वेदे विश्वासरहितः नास्तिकः इति स्थिरीकुर्वन्ति। तत एव 'नास्तिको वेदनिन्दकः' इति वचनं लोके प्रसिद्धमासीत्। बौद्धाः, जैनाश्च वेदप्रामाण्यं नाङ्गीकुवन्तीति कृत्वा ते नास्तिकेषु परिगण्यन्ते।

आस्तिकास्तु वेदस्य यद्यपि प्रामाण्यं स्थापयन्ति तथाऽपि वेदवचनानां अर्थनिर्धारणे भिन्नभिन्नानभिप्रायान् प्रकटयन्ति। द्वैताद्वैतविशिष्टाद्वैतानुयायिनः, शैवाः इत्यादयः वेदानुयायिनः एव। तथाऽपि निष्कृष्टवेदसिद्धान्तः कः इति प्रश्ने कृते परस्परं भिन्नानभिप्रायान् प्रकटयन्ति। तद्यथा अद्वैतिनः जीवब्रह्मणोः ऐक्यं प्रकटयन्ति। द्वैतिनः, विशिष्टाद्वैतिनश्च तन्नाङ्गीकुर्वन्ति। शैवाः वेदानुयायिनः शिवस्य परब्रह्मत्वं प्रतिष्ठापयन्ति। एवं शिवलिङ्गं यत् इष्टलिङ्गमुच्यते तत् ब्रह्मणः अभिन्नमेवेति तेषामभिप्रायः। शिवस्य परब्रह्मत्वं स्थापयितुं ये तावत् मार्गाः शैवाचार्यैः निर्दिष्टाः ते शैवसिद्धान्तनिरूपकग्रन्थेषु विशिष्य शैवागमेषु सुष्ठु निर्दिष्टाः वर्तन्ते। तथा च शैवसिद्धान्तप्रतिपादकेषु ग्रन्थेषु **श्रीकरभाष्यम्, क्रियासारः, वेदान्तसारवीरशैवचिन्तामणिः** इत्यादयः ग्रन्थाः सुप्रसिद्धाः। एतेषु ग्रन्थेषु बहवः श्लोकरूपेणैव विलिखिताः सन्ति। सिद्धान्तशिखामणिरचनायामपि इयमेव प्रक्रिया अनुसृता॥

* * *

# १.मङ्गलाचरणम्

निर्विघ्नतया चिकीर्षितस्य ग्रन्थस्य परिसमाप्त्यर्थं मङ्गलाचरणं करणीयमिति संप्रदायः। इदं च मङ्गलाचरणं ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते वा भवितुमर्हति। तदुक्तं - **'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च प्रथन्ते काव्या'**नीति। केचित्कवयः प्रार्थनां स्वस्य ग्रन्थे एव कुर्वन्ति। अपरे तु मनस्येव प्रार्थनां कृत्वा काव्यरचनामारभन्ते। अलङ्कारसंप्रदाये मङ्गलाचरणं अशीर्वादः, नमस्क्रिया, वस्तुनिर्देश- इति प्रकारत्रयरूपेण अनुसन्धेयमिति निर्णयः कृतोऽस्ति । आशीर्वादः 'भगवान् युष्मान् आशीर्भिः अनुगृह्णातु' इति वा 'भगवान् अस्मान् अनुगृह्णातु'इति वा द्वेधा भवति। कविकुलगुरुः कालिदासः स्वकीये अभिज्ञानशाकुन्तले नाटके -

**'प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः'**

इति आशीर्वादरूपमङ्गलं, रघुवंशमहाकाव्ये-

**'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥'**

इति नमस्कारात्मकं मङ्गलं, तथा कुमारसंभवे महाकाव्ये -

**'अस्त्युत्तरस्यां दिशि देवतात्मा**
**हिमालयो नाम नागाधिराजः'**

इति वस्तुनिर्देशरूपं , त्रिप्रकारमपि मङ्गलाचरणं विधाय अनन्तरकाव्यकर्तॄणां कृते मार्गनिर्देशं चकार।

सिद्धान्तशिखामणिकारेण रूपकालङ्काररञ्जितेन मङ्गलाचरणश्लोकेनानेन ग्रन्थ आरभ्यते-

**त्रैलोक्यसंपदालेख्य समुल्लेखनभित्तये।**
**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नामः॥** (I.1) इति।

उपमानोपमेययोः अर्थात् प्रकृताप्रकृतयोः वस्तुनोः यत्र अभेदः परिकल्प्यते तत्र रूपकालङ्कारः इति आलङ्कारिकाणां मतम् ।

**यत्रोपमानचित्रेण सर्वथाऽप्युपरज्यते।**
**उपमेयमयी भित्तिः तत्र रूपकमिष्यते॥** (V.18) इति **चन्द्रालोककारः** जयदेवः रूपकं लक्षयति। अत्र 'त्रैलोक्यसंपद्' इति पदं उपमेयम्। 'आलेख्यं' इति पदं उपमानम्। त्रैलेक्यसंपदेव आलेख्यमिति रूपणं कृतम्। तत्र चित्रलेखनार्थं पत्रं वा भित्तिर्वा अन्यच्छिलाफलकं वा आवश्यकं भवति। अत एव परब्रह्मरूपः शिवः अत्र भित्त्या अभेदं प्राप्नोति। अर्थात् भित्तिरूपे परमशिवे त्रिलोकात्मकं चित्रं विलिखितमिति भावः।

आलेख्यभित्तिः यथा वा विविधानां चित्राणां लेखनस्य आधारो भवति तथा त्रैलोक्यसंपदः सृष्टेः आधारभूतः शिवः इत्यवगन्तव्यम्। अर्थात् 'यतो वा इमानि भूतानि जायन्ते' इति उपनिषद्वाक्ये प्रतिपादितया रीत्या चित्रविचित्रस्यास्य जगतः निर्माता आधारभूतः, एवं संकल्पकर्ता च शिव एव। तदुक्तं- 'यथोर्णनाभिः सृजते गृह्णते च' इति वचनानुसारेण तन्तुवायः यथा तन्तुजातं सृजति, पुनः संहरति तथा शिवोऽपि जगन्निर्माणं संकल्प्य निर्माति, कालान्तरे



संहरति च। ईदृशं शिवस्य अप्रमेयं स्वरूपं अयं प्रार्थनाश्लोकः सम्यक् द्योतयति।

तथैव मङ्गलश्लोके एव सूच्यार्थसूचनं अथवा काव्यार्थसूचनं कर्तव्यमिति आलङ्कारिकाणां संप्रदायः। प्रसिद्धाः नाटककर्तारः नान्दीश्लोके एव नाटकगतवस्तुनिर्देशं कुर्वन्तीति विदितमेव। अत्र सिद्धान्तशिखामणिकर्ता 'शिवाय ब्रह्मणे नमः' इत्युक्त्वा शिवस्य सच्चिदानन्दरूपत्वं त्रैलोक्यसंपन्मूलकत्वं ब्रह्मत्वं च सुस्पष्टमुवाच। ततः एकविंशतिपरिच्छेदपरिमितेऽस्मिन् प्रबन्धे शिवतत्त्वं निरूपितं भविष्यतीति नमस्काररूपप्रार्थनायां वस्तुनिर्देशोऽपि प्रथमश्लोके एव स्पष्टीकृत इति अवगन्तव्यम्।

* * *

# २. काव्यवैशिष्ट्यम्

सिद्धान्तशिखामणिः इति नाम्ना प्रसिद्धः प्रकृतग्रन्थः शैवसिद्धान्तप्रतिपादकेषु ग्रन्थेषु अन्यतमः। अयं ग्रन्थः ललितसंस्कृतरचनाशोभितः, पठितृणामानन्दजनकश्च भाति। यद्यप्यत्र वस्तु ब्रह्मतत्त्वमेव, तथाऽपि ललितललितया शैल्या, सालङ्कारया भाषया ग्रन्थनिर्माणमासीदिति हेतोः ग्रन्थस्यास्य लोकप्रियत्वं समजनि। तादृशलोकप्रियत्वमानेतुं अयमाचार्यः साहित्यशास्त्रोक्तविधानमवलम्बितवानिति ग्रन्थपरिशीलनेन ज्ञायते। साहित्यशास्त्रं पूर्वं अलङ्कारशास्त्रमिति नाम्ना प्रसिद्धमासीत् ।

वेदस्य तावत् षडङ्गानि प्रसिद्धान्येव। तानि च -

**शिक्षा व्याकरणं छन्दः निरुक्तं ज्यौतिषं तथा ।**
**कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ।।** इति

परिकीर्तितानि। तानि वेदार्थावगाहनार्थं उपकुर्वन्तीति विदितमेव। साहित्यशास्त्रमपि वेदस्य अङ्गमेव भवितुमर्हति, यतः वेदे साहित्यपरिज्ञानं विनियुज्य अवगन्तव्या विषया बहवः सन्ति। वेदेषु अलङ्कारप्रयोगाः अनेकधा दृश्यन्ते। उदाहरणार्थं -

**आत्मानं रथिनं विद्धि शरीरं रथमेव हि ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।।**
**इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।।** इति।

अत्र आत्मस्वरूपनिरूपणार्थं शरीरस्य रथरूपकल्पना कृता। दुर्बोधो



विषयः एतादृशकल्पनाद्वारा सुबोधः क्रियते। तस्मात् उपमारूपकाद्यलङ्कारप्रक्रिया काव्येषु यथा उपयुज्यते तथैव वेदेष्वपि उपयुज्यते इति निश्चप्रचम् ।

अत एव **काव्यमीमांसाकारः** राजशेखर :-

**'उपकारकत्वात् अलङ्कारः सप्तममङ्गमिति यायावरीयः, ऋते च तत्स्वरूपपरिज्ञानादेवार्थानवगतिः'** इति।

अपि च तेनैव -

**'तर्कः त्रयी वार्ता दण्डनीतिः इति याः चतस्रः विद्याः सन्ति ताभिः सह साहित्यविद्याऽपि परिगणनीयेति उक्तम् ।'**

तथाहि -

**'पञ्चमी साहित्यविद्येति यायावरीयः। सा हि चतसृणामपि विद्यानां निष्यन्दः'** इति । तस्मात् अलङ्कारशास्त्रं वेदानुयायिशास्त्राणां वेदसिद्धान्तनिरूपकग्रन्थानां अध्ययने अवगाहने च अत्यन्तमुपकरोतीति विज्ञेयम् ।

वेदे स्थितानां मन्त्राणां अर्थनिरूपणे बहुभिः बहवः प्रकाराः आश्रिताः सन्ति। तत एव वेदेषु निरूपितानां सिद्धान्तानामपि बहुत्वं विलोक्यते। ते च सिद्धान्ताः अनेकग्रन्थेषु तत्त्वज्ञैः ग्रन्थकर्तृभिः सुनिरूपिताः सन्ति । ते च ग्रन्थकर्तारः व्याकरणादिशास्त्रेषु यथा निष्णाताः तथैव साहित्यशास्त्रेऽपि। ततश्च सिद्धान्तनिरूपणावसरे पद्येषु वा गद्येषु वा तैः आलङ्कारिकी प्रक्रिया समाश्रिताऽस्ति।

वेदमूलकसिद्धान्तेषु वीरशैवसिद्धान्तस्य प्रामुख्यं तावत् सुप्रसिद्धमेव। तस्य सिद्धान्तस्य निरूपका ग्रन्थाः अपि गीर्वाणवाण्यां एवं प्रान्तीयभाषासु च अनेके लभ्यन्ते। गीर्वाणवाण्यां तावत् नीलकण्ठशिवाचार्यस्य **क्रियासारः**, श्रीपतिपण्डितस्य **श्रीकरभाष्यम्**, मायीदेवस्य **अनुभवसारः**, नन्दिकेश्वरस्य **लिङ्गधारणचन्द्रिका**, स्वप्रभानन्दाचार्यस्य **शिवाद्वैतमञ्जरी**, श्रीमरितोण्टदार्यस्य **वीरशैवानन्दाचन्द्रिका**, केलदि बसवभूपालस्य **शिवतत्त्वरत्नाकरः** इत्यादयः प्रसिद्धाः ग्रन्थाः। तेषु **सिद्धान्तशिखामणिः** इति वीरशैवसिद्धान्तनिरूपकः ग्रन्थराजः शैवमतानुयायिभिः सर्वैरपि बहुधा संभाव्यते ।

अस्य ग्रन्थस्य कर्ता मुद्ददेवस्य पौत्रः , सिद्धानाथस्य पुत्रः, शिवयोगि शिवाचार्य इति प्रसिद्धः। ग्रन्थोऽयं कदा विरचितः इत्यस्मिन् विषये अभिप्रायभेदाः श्रूयन्ते। अयमेक एव ग्रन्थः अनेन योगिना विरचितः अस्माकं दृष्टिपथमायाति। अस्मिन् ग्रन्थे एकविंशतिः अध्यायाः सन्ति। आहत्य श्लोकसंख्या १३९८ भवति। रचना सर्वा अपि अनुष्टुप्छन्दस्येव प्रवर्तते। परन्तु काव्यमर्यादामनुसृत्य अध्यायान्ते विविधानि छन्दांसि प्रयुक्तानि।

* * *

## ३.वर्णनानैपुण्यम्

आलङ्कारिकाः प्रबन्धेषु वर्णनीयानंशानधिकृत्य एवं प्रतिपादयन्ति-

**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम् ।**
**उद्यानसलिलक्रीडा मधुपानरतोत्सवाः ॥** (68)

**विप्रलम्भो विवाहश्च कुमारोदयवर्णनम् ।**
**मन्त्रद्यूतप्रयाणाजिनायकाभ्युदया अपि ॥** (69)

**एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते।**
**एषामष्टादशानां यैः कैश्चिदूनमपीष्यते ॥** (70)

(काव्यप्रकरणम्- **प्रतापरुद्रीयम्** 68-70)इति॥

अत्र नायकाभ्युदयस्य, शैलााश्रमादीनां वर्णनमपि ग्रन्थस्य काव्यत्वं स्थापयति। कदाचिदेकं मुक्तकमपि विषयवैशिष्ट्यं पुरस्कृत्य प्रबन्धतुल्यत्वं प्राप्नोति। ध्वनिकारेण आनन्दवर्धनेन **'मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते'** इत्युक्तम्। अमरुककवेः मुक्तकानि लोकप्रसिद्धान्येव। **'अमरुककवेः एकः श्लोकः प्रबन्धशतायते'** इत्याभाणकं श्रूयते किल।

तथा च सिद्धान्तशिखामणौ विरचितानि वर्णनानि तस्य काव्यगौरवमापादयन्तीत्यत्र न सन्देहः। आदौ पञ्चसु परिच्छेदेषु शिवस्तुतिः, शक्तिस्तुतिः इत्यादिस्तुतयः तत्तद्देवतावर्णनपराः विलोक्यन्ते। तानि च वर्णनानि लोकोत्तराणि भवन्ति।

प्रथमपरिच्छेदस्यारम्भे एव सप्तभिः श्लोकैः कृतायां शिवस्तुतौ शिवस्य वर्णनं पठ्यते। अत्रैव अष्टमश्लोकादारभ्य द्वादश श्लोकपर्यन्तं शक्तिस्तुतिं पठामः। द्वितीये परिच्छेदे तृतीयश्लोकादारभ्य चतुर्दशश्लोकपर्यन्तं द्वादशभिः श्लोकैः परमात्मनः वर्णनं विहितमस्ति। तृतीये परिच्छेदे प्रथमश्लोकादारभ्य अष्टमश्लोकपर्यन्तं कैलासगिरिः वर्णितः। तदनु नवमश्लोकादारभ्य त्रयोविंशश्लोकपर्यन्तं पञ्चदशभिःश्लोकैः सिंहासनासीनस्य परमेश्वरस्य महोन्नतवैभवं वर्णितम्। तदनु चतुर्विंशश्लोकादारभ्य षट्त्रिंशश्लोकपर्यन्तं त्रयोदशभिः श्लोकैः शक्तिवर्णनं कृतम्। ईश्वरस्य यादृशं प्राधान्यं वर्तते तादृशमेव शक्तेरपि वर्तते इति कृत्वा शक्तिविशिष्टाद्वैतनिरूपणपरे अस्मिन् ग्रन्थे शक्तेः वर्णनमपि सुष्ठु निर्व्यूढम्। सप्तत्रिंशश्लोकादारभ्य षट्पञ्चाशश्लोकपर्यन्तं विंशतिसंख्याकेषु श्लोकेषु परमेश्वरस्य सेवावैविध्यं प्रस्तुतम्। तत्र तत्तद्देवताः शिवं कथं सेवन्ते इति न्यरूपि। तस्मिन्नेव परिच्छेदे सप्तपञ्चाश श्लोकादारभ्य पञ्चषष्टितमश्लोकपर्यन्तं नवभिः श्लोकैः परमेश्वरस्य जगत्परिपालनप्रकारः वर्णितः। चतुर्थपरिच्छेदे अष्टभिः श्लोकैः रेणुकवर्णनम्, अष्टभिः श्लोकैः मलयाचलवर्णनम्, अष्टभिः श्लोकैः अगस्त्यमुनेराश्रमवर्णनम्, तथा एकविंशतितमे परिच्छेदे सप्तभिःश्लोकैः (४५-५१) सोमनाथस्य स्तुतिपरं वर्णनं च अत्यन्तं सुन्दरतया विहितानि सन्ति।

साधारणतया उपनिषत्सु वेदान्तसिद्धान्ताः गुरुशिष्यसंवादरूपेण निबद्धाः सन्ति। यथा कठोपनिषदि गुरुस्थाने यमः शिष्यस्थाने नचिकेताश्च स्थित्वा आत्मतत्त्वनिरूपणं कुरुतः, एवं छान्दोग्येऽपि नारदसनत्कुमारयोः संवादःश्रूयते। एतादृशाः संवादाः उपनिषत्सु सर्वत्र निबद्धाः सन्ति। महाभारते निबद्धायां भगवद्गीतायां ब्रह्मविद्याप्रतिपादनं संवादरूपेणैव निबद्धमस्ति। तत्र श्रीकृष्णः वक्ता, अर्जुनः पृच्छकः। उपनिषत्तत्त्वमेव तत्रापि निरूपितम्। तदेवोक्तं अध्यायान्तेषु वाक्येषु - **'इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे.... योगो नाम.... अध्यायः।'** इति। एवमेव सिद्धान्तशिखामणावपि रेणुकागस्त्यसंवादःचतुर्थ परिच्छेदे ग्रथितः अस्ति। तत्र रेणुकः वक्ता, अगस्त्यः प्रष्टा। एवं तयोः गुरुशिष्यत्वं सिद्धं भवति। साधारणतया शैवसिद्धान्त-प्रतिपादकेषु विशिष्य दक्षिणदेशे अगस्त्यमहर्षिरेव अग्रगण्यः इति लोके श्रूयते। परन्तु अस्मिन् ग्रन्थे शिवतत्त्वनिरूपणसन्दर्भे रेणुकस्य गुरुत्वं अगस्त्यस्य शिष्यत्वं च प्रतिपादितं भवति। परमशिवस्य प्रेरणेनैव भूलोके अवतीर्णो रेणुकः वीरशैवमतं व्याप्तं चकार। तस्मिन् कार्यक्रमे शिष्यरूपेणोपस्थापितः अगस्त्यः प्रमुखं स्थानं प्राप्नोति।



ग्रन्थान्ते एकविंशतितमपरिच्छेदे अन्यः कश्चन संवादः रेणुकविभीषणयोर्मध्ये प्रचलति। तत्र विभीषणः नवकोटिलिङ्गप्रतिष्ठां संकल्पितवतः अग्रजस्य रावणस्य संकल्पः कार्यरूपं न प्राप इति धिया, अग्रजसंकल्पं पूरयितुकामः अवशिष्टां कोटित्रयलिङ्गानां प्रतिष्ठां कुर्वन्तु इति भगवन्तं रेणुकं प्रार्थयति। अस्मिन्नेव सन्दर्भे रेणुकविभीषणयोः संवादः प्रवर्तते। तथा च ग्रन्थेऽस्मिन् तत्र तत्र

सन्दर्भानुगुणतया निबद्धाः संवादाः तत्त्वप्रतिपादनविषयपराः अपि काव्यत्वगौरवसमुपेताः समुल्लसन्तीत्यत्र न सन्देहः।

**दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः।**
**तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।**
**नोदिता कविता लोके यावज्जाता न वर्णना** ॥ इति

सुप्रसिद्धेन आलङ्कारिकेण भट्टतौतेन काव्ये वर्णनाप्राधान्यं, वर्णनेन कवितासमुल्लासश्च सम्यक् निरूपितौ। अर्थात् कविः द्रष्टा भवति। दृष्टस्य वस्तुनः निपुणतया वर्णनमपि करोति। साक्षात् नेत्राभ्यामदृष्टा अपि विषयाः कविबुद्धिगोचराः भवन्ति। तान् विषयान् वर्णयित्वा श्रोतृणां पुरतः उपस्थाप्य कविः श्रोतॄनपि तद्दर्शनानन्दसंयुक्तान् करोति। यावत्पर्यन्तं लोके वर्णना उत्पन्ना नासीत् तावत्पर्यन्तं कवित्वमपि नोत्पन्नम्। कविर्वाल्मीकिः स्वबुद्धिगोचरं रामवृत्तान्तं साक्षाद्दृष्टमिव अनुभूय वर्णयामास। अयं वाल्मीकिः कवीनां मार्गदर्शी बभूव। व्यासकालिदासादयः सर्वेऽपि महाप्रबन्धरचयितारः रामायणे स्थितां विविधविषयवर्णनापरिपाटीं ज्ञात्वैव स्वस्वग्रन्थरचनायां निपुणा बभूवुः।

सिद्धान्तशिखामणिकर्ता न केवलं संस्कृतज्ञः, किन्तु रामायणभारतरघुवंशादीन् विविधान् प्रबन्धान् सम्यक् परिशील्य तन्निर्दिष्टमार्गेणैव इमां रचनां चकारेति अनेन कविना तत्र तत्र कृतानि वर्णनानि दृष्ट्वा निःसंशयं वक्तुं शक्यते।



### १. शिववर्णनम्

तत्रादौ परमेश्वरस्य वर्णना एवं उपनिबद्धाऽस्ति प्रथमपरिच्छेदे-

**त्रैलोक्यसंपदालेख्यसमुल्लेखनभित्तये।**
**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः॥** (I-1)

**ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते ।**
**वेदान्तिनो जगन्मूलं तं नमामि परं शिवम् ॥** (I-2)

**यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्तत्वसंचयः।**
**निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम् ॥** (I-3)

**यद्भासा भासते विश्वं यत्सुखेनानुमोदते ।**
**नमस्तस्मै गुणातीतविभवाय परात्मने ॥** (I-4)

**सदाशिवमुखाशेषतत्त्वोन्मेषविधायिने ।**
**निष्कलङ्कस्वभावाय नमः शान्ताय शम्भवे ॥** (I-5)

**स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।**
**स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे॥**(I-6)

**यत्र विश्राम्यतीशत्वं स्वाभाविकमनुत्तमम् ।**
**नमस्तस्मै महेशाय महादेवाय शूलिने ॥** (I-7)

इति। तथा च द्वितीये परिच्छेदे -

**सच्चिदानन्दरूपाय सदसद्व्यक्तिहेतवे ।**
**नमः शिवाय साम्बाय सगणाय स्वयम्भुवे ॥** (II-1)

अस्ति सच्चित्सुखाकारमलक्षणपदास्पदम् ।
निर्विकल्पं निराकारं निरस्ताशेषविप्लवम् ॥ (II-3)

परिच्छेदकथाशून्यं प्रपञ्चातीतवैभवम् ।
प्रत्यक्षादिप्रमाणानां अगोचरपदे स्थितम् ॥ (II-4)

स्वप्रकाशविराजन्तमनामयमनौपमम् ।
सर्वज्ञं सर्वगं शान्तं सर्वशक्ति निरङ्कुशम् ॥ (II-5)

शिवरुद्रमहादेवभवादिपदसंज्ञितम् ।
अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम् ॥ (II-6)

तत्र लीनमभूत्पूर्वं चेतनाचेतनं जगत् ।
स्वात्मलीनं जगत्कार्यं स्वप्रकाश्यं तदद्भुतम् ॥(II-7)

शिवाभिधं परं ब्रह्म जगन्निर्मातुमिच्छया।
स्वरूपमादधे किञ्चित् सुखस्फूर्तिर्विजृम्भितम् ॥ (II-8)

निरस्तदोषसम्बन्धं निरुपाधिकमव्ययम् ।
दिव्यमप्राकृतं नित्यं नीलकण्ठं त्रिलोचनम् ॥ (II-9)

चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम् ।
शुद्धमुक्ताफलाभासं उपास्यं गुणमूर्तिभिः॥ (II-10)

विशुद्धज्ञानकरणं विषयं सर्वयोगिनाम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसमप्रभम् ।
अप्राकृतगुणाधारं अनन्तमहिमास्पदम् ॥ (II-11) इति।



तृतीये परिच्छेदे -

वन्दारुदेवमुकुटमन्दाररसवासितम् ।
रत्नसिंहासनं दिव्यमध्यस्तं परमेश्वरम् ॥ (III.9)

तमास्थानगतं देवं सर्वलोकमहेश्वरम् ।
त्रय्यन्तकमलारण्यविहारकलहंसकम् ॥ (III.10)

उदारगुणमोंकारशुक्तिकापुटमौक्तिकम् ।
सर्वमङ्गलसौभाग्यसमुदायनिकेतनम् ॥ (III.11)

संसारविषमूर्छालुजीवसंजीवनौषधम् ।
नित्यप्रकाशनैर्मल्यकैवल्यसुरपादपम् ॥ (III.12)

अनन्तपरमानन्दमकरन्दमधुव्रतम् ।
आत्मशक्तिलतापुष्यत्त्रिलोकीपुष्पकोरकम् ॥(III.13)

ब्रह्माण्डकुण्डिकाषण्डपिण्डीकरणपण्डितम् ।
समस्तदेवताचक्रचक्रवर्तिपदे स्थितम् ॥ (III.14)

चन्द्रबिम्बायुतच्छायादायादद्युतिविग्रहम् ।
माणिक्यमुकुटज्योतिर्मञ्जरीपिञ्जराम्बरम् ॥ (III.15)

चूडालं सोमकलया सुकुमारबिसाभया।
कल्याणपुष्पकलिकाकर्णपूरमनोहरम् ॥ (III.16)

मुक्तावलयसंबद्धमुण्डमालाविराजितम् ।
पर्याप्तचन्द्रसौन्दर्यपरिपन्थिमुखश्रियम् ॥ (III.17)

**प्रातःसंफुल्लकमलपरियायत्रिलोचनम् ।**
**मन्दस्मितमितालापमधुराधरपल्लवम् ॥** (III.18)

**गण्डमण्डलपर्यन्तक्रीडन्मकरकुण्डलम् ।**
**कालिम्ना कालकूटस्य कण्ठनाले कलङ्कितम्॥** (III.19)

**मणिकङ्कणकेयूरमरीचिकरपल्लवैः ।**
**चतुर्भिःसंविराजन्तं बाहुमन्दारशाखिभिः॥** (III.20)

**गौरीपयोधाराश्लेषकृतार्थभुजमध्यमम् ।**
**सुवर्णब्रह्मसूत्राङ्कं सूक्ष्मकौशेयवाससम् ॥** (III.21)

**नाभिस्थानावलम्बिन्या नवमौक्तिकमालया।**
**गंगयेव कृताश्लेषं मौलिभागावतीर्णया ॥** (III.22)

**पदेन मणिमञ्जीरप्रभापल्लवितश्रिया।**
**चन्द्रवत्स्फाटिकं पीठं समावृत्य स्थितं पुरः॥** (III.23)

एकविंशतितमे परिच्छेदे **कोल्लिपाकस्थ सोमनाथस्तुतिः**

**देवदेव जगन्नाथ जगत्कारणकारण।**
**ब्रह्मविष्णुसुराधीश वन्द्यमानपदाम्बुज ॥** (XXI.44)

**संसारनाटकभ्रान्तिकलानिर्वहणप्रद।**
**समस्तवेदवेदान्तपरिबोधितवैभव ॥** (XXI.45)

**संसारवैद्य सर्वज्ञ सर्वशक्तिनिरङ्कुश।**
**सच्चिदानन्दसर्वस्व परमाकाशविग्रह॥** (XXI.46)



**समस्तजगदाधार ज्योतिर्लिङ्गविजृम्भण।**
**सदाशिवमुखानेकदिव्यमूर्तिकलाधर ॥** (XXI.47)

**गुणत्रयपदातीत मलत्रयविनाशन।**
**जगत्त्रयविलासात्मन् श्रुतित्रयविलोचन ॥** (XXI.48)

**पाहि मां परमेशान पाहि मां पार्वतीपते।**
**त्वदाज्ञया मयैतावत्कालमात्रं महीतले ।**
**अचारि भवदुक्तानामागमानां प्रसिद्धये ॥** (XXI.49)

**अतःपरं स्वरूपं ते प्राप्तुकामोऽस्मि शंकर ।**
**अन्तरं देहि मे किञ्चिदनुकम्पाविशेषतः॥**(XXI.50) इति।

अत्र शिववर्णने शिवस्य परब्रह्मत्वं प्रतिपादितमस्ति। वेदान्ताः अपि ब्रह्मणः सर्वात्मकत्वं, शिवत्वं च निरूपयन्ति। ब्रह्मणैव संकल्पितमिदं जगत् समुल्लसति। सूर्यचन्द्रादीनां प्रकाशः तेषां सहजो न भवति। परन्तु ब्रह्मणैव परिकल्पितः इति कठोपनिषद्ब्रवीति । तदुक्तं -

**न तत्र सूर्यो भाति न च चन्द्रतारकम् ।**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः॥**

**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति॥** (V.15)

अयमेव विषयः **'यद्भासा भासते विश्वम्'** इति वचसा निरूपितः। तदनु **'यत्सुखेष्वनुमोदते'** एतदपि तत्त्वं श्रुतौ **'अस्यैवानन्दस्यापि**

**अन्यानि भूतानि मात्रामुपजीवन्ति'** इति प्रतिपादितमस्ति। एवं च सिद्धान्तशिखामणिकर्त्रा श्रुतिप्रतिपादितया पद्धत्या शिवस्वरूप-मत्र वर्णितमिति निश्चप्रचम् ।

ग्रन्थोऽयं शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरः। शिवः मङ्गलनिलयः, विश्वात्मा, सकलकारणभूतः, ब्रह्मशब्दवाच्यः, जगन्नियामकः, गुणत्रयात्मकः, गुणत्रयातीतः, भक्तैस्सर्वैरप्याराधितः अभीष्टानि फलानि मोक्षं च प्रददाति। सोऽयं शिवः शक्त्या सहित एव एतत्सर्वं कर्तुं हर्तुं अन्यथयितुं वा प्रभवति। **'एकोऽहं बहुस्यां प्रजायेय'** इति स्वसङ्कल्पवशादेव परमात्मा स्वलीलारूपमिदं जगत् सृजति। तस्मिन् कर्मणि तस्य शक्तिरेव सहायकारिणी भवति। सौन्दर्यलहर्यां श्रीशङ्कराचार्यः -

**शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।**
**अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि**
**प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥**

इत्युक्त्वा शक्तेः अनन्यसामान्यं प्रभावं स्तौतिस्म।

सिद्धान्तशिखामणिग्रन्थकर्ताऽपि शक्तिविशिष्टस्य शिवस्य जगन्निर्माणकारित्वं प्रतिपादयन्नेवं ब्रवीति -

**'वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम्'** (II.2)

**'तदीया परमाशक्तिः सच्चिदानन्दलक्षणा।**
**समस्तलोकनिर्माणसमवायस्वरूपिणी'** ॥ (II.12) इति।



तथा च अस्य ग्रन्थस्य प्रधानप्रतिपाद्यभूतः शिवः शक्तिविशिष्ट एव भवति। तस्य वर्णनं कविना सुनिपुणं निर्व्यूढमस्ति।

एवं शिवप्रभावं वर्णयताऽनेन कविना वर्णनाविषये काव्यमर्यादा परिपलिता। कालिदासादिकविविरचितेषु महाकाव्येष्वपि भगवतः शिवस्य एतादृशं वर्णनं प्रसिद्धमेव। यथाह कुमारसंभवे द्वितीये सर्गे -

**'तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः'** ॥ (6) इति

सृष्टिस्थितिलयानां एकमात्रकारणत्वेन शिवं वर्णयतिस्म। अपि च कादम्बर्यां प्रार्थनाश्लोके भट्टबाणः -

**'त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे'।**

इति शिवस्य जगन्निर्माणकारणत्वं प्रतिपादयतिस्म। एवं च त्रयाणामप्येतेषां कवीनां शिववर्णने सुस्पष्टं सादृश्यं परिस्फुरति। शिवाचार्यकवित्वस्य कालिदासादिकवितातुल्यत्वमपि अवगतं भवति। बाणकविरचनया शिवाचार्यरचनायाः साम्यं सुव्यक्तमेव। तथैव अनेन कविना द्वितीये परिच्छेदे कृते शिववर्णने (II.1) शक्त्या विशिष्टः शिव एव जगत्कारणतां प्राप्नोतीति अभिहितम्। अयमभिप्रायः सौन्दर्यलहर्यां 'शिवः शक्त्या युक्तो' इति प्रथमे श्लोके शंकराचार्यैः स्पष्टीकृतः। अयमेव भावः कालिदासेन कुमारसंभवे-

**स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया।**
**प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥** (7)

**स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते।**
**यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ।।** (8)

इति स्पष्टीकृतः ।

तथैव तृतीये परिच्छेदे (III-23) नवमश्लोकादारभ्य त्रयोविंशश्लोकपर्यन्तं शिवः शिवयोगिशिवाचार्येण अपूर्वया कयाचन प्रक्रियया उपवर्णितः। अस्मिन् वर्णने सम्पूर्णकाव्यच्छाया सहृदयैरनुभूयते। अलङ्काराश्च प्रभूततया प्रयुक्ताः। उदाहरणार्थं उपनिषदं वधूत्वेन, ओंकारं तालवृन्तत्वेन च अभिधाय रूपकालङ्कारं प्रयुज्य वर्णयन् कविः शिवस्वरूपमेवं उपस्थापयामास-

**झणत्कंकणजातेन हस्तेनोपनिषद्वधूः।**
**ओंकारतालवृन्तेन वीजयामास शंकरम् ।।** (III.39)

एवं काव्यस्य काव्यत्वापादिका वर्णनापद्धतिः सिद्धान्त शिखामणौ विस्तृततया उपलभ्यते इति कृत्वा काव्यलक्षणलक्षितोऽयं ग्रन्थः रमणीयं काव्यमपि भवतीति वचने न कोऽपि संशयः। यद्यपि अयं ग्रन्थः वेदान्ततत्त्वप्रतिपादनपरः तथाऽपि काव्यरचनाविधानमाश्रित्य कान्तासम्मितत्वेन सरसविधान-मवलम्ब्य रचना विहितेति हेतोः आदरणीयग्रन्थेषु अनेकेषु अग्रश्रेणीं अधिरोहति।

अत्र अन्तिमे परिच्छेदे रेणुकेन कृते सोमनाथस्तुतेः आरम्भे परमशिवस्य जगत्कारणकारणत्वं तथा अनौपम्य, अप्रेयत्वादि गुणाः



भारवेः किरातार्जुनीये अष्टादशतमे सर्गे पाण्डवमध्यमेन स्तुतं किरातवेषधरं शिवं स्मारयन्ति -

**त्वमन्तकः स्थावरजङ्गमानां**
**त्वया जगत्प्रणिति देव विश्वम् ।**
**त्वं योगिनां हेतुफले रुणत्सि**
**त्वं कारणं कारणकारणानाम् ।।** (35)

**तेन सर्वभुवनातिगलोके**
**नोपमानमसि नाप्युपमेयः।।** (86)

**२. अगस्त्याश्रमवर्णनम्**

सिद्धान्तशिखामणिकर्ता ग्रन्थस्यास्य चतुर्थे परिच्छेदे अष्टभिःश्लोकैः अगस्त्यमुनेराश्रमं एवं वर्णयति -

**तत्र कुत्रचिदाभोगसर्वर्तृकुसुमद्रुमे।**
**अपश्यदाश्रमं दिव्यं अगस्त्यस्य महामुनेः।।** (IV.17)

**मन्दारचन्दनप्रायैर्मण्डितं तरुमण्डलैः।**
**शाखाशिखरसंलीनतारकागणकोरकैः।।** (IV.18)

**मुनिकन्याकरानीतकलशाम्बुविवर्धितैः।**
**आलवालजलास्वादमोदमानमृगीगणैः।।** (IV.19)

**हेमारविन्दनिष्यन्दमकरन्दसुगन्धिभिः।**
**मरालालापवाचालुवीचिमालामनोहरैः।।** (IV.20)

**इन्दीवरवरज्योतिरन्धीकृतहरिन्मुखैः।**
**लोपामुद्रापदन्यासचरितार्थतटाङ्कितैः॥** (IV.21)

**हारनीहारकर्पूरहरहासामलोदकैः।**
**नित्यनैमित्तिकस्नाननियमार्थैस्तपस्विनाम् ॥**(IV.22)

**प्रकृष्टमणिसोपानैः परिवीतं सरोवरैः।**
**विमुक्तसत्त्ववैरस्यं ब्रह्मलोकमिवापरम् ॥** (IV.23)

**हूयमानाज्यसंतानधूमगन्धिमहास्थलम् ।**
**शुकसंसत्समारब्धश्रुतिशास्त्रोपबृंहणम् ॥** (IV.24)

सनातनधर्मे मुनीनां जीवनस्य अपूर्वं वैशिष्ट्यं पावनत्वं च अस्ति। तज्जीवनानुगुणत्वेनैव तेषामाश्रमाः अपि प्रतिष्ठां लेभिरे। प्राचीनवाल्मीकिव्यासकालिदासादीनां रचनास्वपि एतादृशवर्णनानि विलोक्यन्ते। विविधतरुगुल्ममण्डलैः सरोवरैः उटजैः विविधमृगपक्षिगणैः समावृतत्वं आश्रमाणां सामान्यलक्षणम्। कवयः एतादृशान् परिकरान् समुपयुज्य सुमनोहराणि चित्राणि चित्रीकुर्वन्ति। उदाहरणार्थं कालिदासेन रघुवंशमहाकाव्ये प्रथमसर्गे पञ्चभिश्श्लोकैः वसिष्ठस्याश्रमं वर्णितमस्ति। अत्र कालिदास शिवयोगि-शिवाचार्ययोः आश्रमवर्णनविधाने साम्यं सम्यक् दृश्यते। सिद्धान्तशिखामणौ एकोनविंशश्लोके मुनिकन्यकाभिः कृतः आलवालजलसेकः वर्णितः। अत्र लतानां एवं इतरपादपानां च समृद्धिः आश्रमप्राङ्गणे आवश्यकी भवति। तदर्थमेव मुनिकन्याभिः अनुदिनं आलवालेषु जलसेकः क्रियते। तत्र समृद्धं जलं आलवालेषु



लभ्यते इति कृत्वा तत्र स्थिताः मृगीगणाः अपि आलवालगतं जलं पिबन्ति। मृगाः निर्भयं आश्रमेषु सञ्चरन्ति। साधारणजनपदेषु तथा मृगसञ्चारः न दृश्यते। तथा च शिवयोगिशिवाचार्येण कृतं इदं वर्णनं सर्वथा समुचितमाभाति। एतादृशमेव वर्णनं कालिदासस्य वसिष्ठाश्रमवर्णने अवलोक्यते। रघुवंशे प्रथमसर्गे एकाधिकपञ्चाश श्लोके मुनिकन्याकृतः जलसेकः एवं वर्णितः.

**सेकान्ते मुनिकन्याभिः तत्क्षणोज्झितवृक्षकम् ।**
**विस्रंभाय विहङ्गानां आलवालाम्बुपायिनाम् ॥** (I.51)

पूर्वग्रन्थे आलवालजलं मृगीगणाःपिबन्तीत्युक्तम्, कालिदासकाव्ये जलं विहङ्गाः पिबन्तीति वर्णितम्। आश्रमप्रान्तेषु मृगसञ्चार इव पक्षिसंचारोऽपि बहुधा सम्पद्यते। एवं च आश्रमवर्णने उभयोरपि सादृश्यं स्पष्टमनुभूयते।

एवमेव सिद्धान्तशिखामणौ (IV) चतुर्विंशश्लोके मुनिकृत होमप्रस्तावः श्रूयते। कालिदासरचनायामपि रघुवंशे प्रथमसर्गे त्रिपञ्चाशश्लोके आहुतिगन्धबन्धुराः धूमाः एवमुपवर्णिताः-

**अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।**
**पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः॥** इति।

आश्रमेषु मुनयः नित्यं होमकृत्यं निर्वहन्ति। तत्र धूमोद्गमः अवश्यं जायते। तथा च उभयोरपि कवयोः आश्रमवर्णने सारूप्यं विस्पष्टं लक्ष्यत इति कृत्वा रघुवंशस्येव सिद्धान्तशिखामणेरपि काव्यत्वं सम्पन्नं भवतीत्यत्र न कोऽपि संशयः।

तथैव कालिदासस्य कुमारसंभवेऽपि पार्वत्याः तपश्चरणवर्णनसंदर्भे पादपानां जलसेकः मृगेभ्यः अरण्य-बीजाञ्जालिदानं च प्रस्तुत्य आश्रमवातावरणमेवमुपवर्णितम् -

**अतन्द्रिता सा स्वयमेव वृक्षकान्**
**घटस्तनप्रस्रवणैर्व्यवर्धत।**
**अरण्यबीजाञ्जलिदानलालिता**
**तथा च तस्यां हरिणा विशस्वसुः॥** (V.16)

एवमेव आश्रमेषु जन्तवः क्रूरमृगाश्च स्वकीयं प्रकृतिसहजं वैरभावमपि उत्सृज्य साधुजीवनं कुर्वन्तीति विषयं कालिदासशिवाचार्यौ अत्यन्तसुन्दरया रीत्या प्रतिपादितवन्तौ स्वेषु ग्रन्थेषु। तत् पश्यतु - शिवाचार्यः कथं कालिदासमनुसरतीति-

**'विमुक्तसत्त्ववैरस्यं'** शिवाचार्यः
**विरोधि सत्त्वोज्झितपूर्वमत्सरम् –** कालिदासः
(**कुमारसंभवम्** V.17)

एवं सिद्धान्तशिखामणेः रघुवंशकुमारसंभवादि-महाकाव्यैस्सह साम्यं सुष्ठु निष्पन्नं भवतीति सिद्धम् ।

## ३. मलयाचलवर्णनम्

सिद्धान्तशिखामणौ चतुर्थे परिच्छेदे रेणुकस्य भूलोकाव-तरणसन्दर्भे मलयाचलसौन्दर्यं श्लोकत्रयेण समुपवर्णितमस्ति-



**नवचन्दनकान्तार कन्दलन्मन्दमारुतम् ।**
**अभङ्गुरभुजङ्गस्त्रीसंगीतरससङ्कुलम् ॥** (IV.14)

**करिपोतकराकृष्ट स्फुरदेलातिवासितम् ।**
**वराहदंष्ट्रिकाध्वस्तमुस्तासुरभिकन्दरम् ॥** (IV.15)

**पटीरदलपर्यङ्कप्रसुप्तव्याधदम्पतिम् ।**
**माधवीमल्लिकाजातिमञ्जरीरेणुरञ्जितम्॥**(IV.16) इति।

कालिदासमहाकविनाऽपि स्वकीये रघुवंशे रघोः जैत्रयात्रासन्दर्भे चतुर्थसर्गे मलयपर्वतः त्रिभिश्श्लोकैः वर्णितोऽस्ति। अत्र उभयोरपि वर्णनयोः भावसाम्यं स्पष्टं दृश्यते। प्रधानतया उभयोः वर्णनयोः मलयाचले एलालतासौन्दर्यं परामृष्टमस्ति। यदि कालिदासेन एलासुवासनायाः सम्बन्धः तुरगमत्तेभयोः प्रवृत्तौ योजितः[१], शिवयोगिशिवाचार्येण, तत्संबन्धः करिपोतवराहयोरुपरि परिकल्पितः। महाकवीनां वर्णनेषु प्रतिपाद्यवस्तूनां एकत्वस्थितौ भावसाम्यं अनेन प्रकारेण सुस्पष्टं भवतीति वेदितव्यम्।

## ४. महात्मनां समावेशसल्लापवर्णनम्

साधारणतया महात्मनां वा गुरुशिष्ययोर्वा प्रथमे सम्मेळने तेषां मध्ये अतिथिपूजा, गौरवादाराणां परस्परप्रदर्शनं कुशलप्रश्नानां विनियोगः संप्रदायत्वेन परिगण्यते। महाकाव्येषु एतादृशानि महात्मनां सम्मेलनानि तत्र तत्र निबद्धानि सन्ति। सिद्धान्तशिखामणि ग्रन्थेऽपि

१. ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः॥ (IV. 47)

शिवाज्ञामनुसृत्य रेणुकगणेश्वरः वीरशैवसिद्धान्तप्रतिष्ठापनार्थं भूलोकमवतीर्य आगस्त्याश्रममागच्छति। मुनेः अगस्त्यस्य दर्शनं करोति। तदनन्तरं तयोः मध्ये प्रचलितं संभाषणं रघुवंशमहाकाव्ये सन्तानप्राप्त्यै गुरुसकाशमागतस्य दिलीपस्य गुरुणा वसिष्ठमहर्षिणा सह कृतं संलापं स्मारयति।

समागतस्य राज्याश्रममुनेः कुशलमधिकृत्य आरण्यक-मुनिना कृतस्य कुशलप्रश्नस्य समाधानरूपेण दत्ते प्रतिवचने स्वकीयं सौभाग्यसर्वस्वं गुरूणामनुग्रहादेवेति सूचयन् महर्षेरौन्नत्यं बहुधा एवं प्रशंसति दिलीप :-

**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।**
**दैवानां मानुषीणां च प्रतिकर्ता त्वमापदाम् ।।** (I.60)

**तव मन्त्रकृतोमन्त्रैः दूरात्प्रशमितारिभिः।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदश्शराः।।** (I.61)

**पुरुषायुषजीविन्यो निरातङ्का निरीतयः।**
**यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ।।(**I.62) इति।

सिद्धान्तशिखामणावपि कैलासात् भूलोकमवतीर्णः रेणुकः अगस्त्यं एवं कुशलं पृच्छति -

**निर्विघ्नं वर्तसे किं नु नित्यास्ते नियमक्रियाः**(IV.38) इति।

समाधानरूपेण आगस्त्यमहर्षिः स्वकीयं स्वास्थ्यं रेणुकसिद्धस्य करुणाप्रसादकारणादेवेति भक्तिपूर्वकं एवं स्तौति-



**अहमेव मुनीन्द्राणां लालनीयोऽस्मि सर्वदा ।**
**भवदागमसंपत्तिः मां विना कस्य संभवेत् ।।** (IV.46)

**स्थिरमद्य शिवज्ञानं स्थिरा मे तापसक्रिया।**
**भवद्दर्शनपुण्येन स्थिरा मे मुनिराजता ।।** (IV.47)

**रेणुकं त्वां विजानामि गणनाथं शिवप्रियम् ।**
**अवतीर्णमिमां भूमिं मदनुग्रहकाङ्क्षया ।।** (IV.50)

**भवादृशानां सिद्धानां प्रबोधध्वस्तजन्मनाम् ।**
**प्रवृत्तिरीदृशी लोके परानुग्रहकारिणी ।।**(IV.51)इति।

अत्र वसिष्ठरेणुकयोः कुशलप्रश्नयोः सादृश्यं सुस्पष्टमवगम्यते। तथैव यथा दिलीपः सविनयं स्वसुस्थितेः कारणं गुरूणामनुग्रह एवेति वसिष्ठं स्तौति तथा अगस्त्योऽपि स्वीयं मुनिराजत्वं शिवज्ञानं च रेणुकदर्शनपुण्येन स्थिरीकृतमिति तं स्तौति। तथा च महतां गुरूणां शिष्याणां च समागमे गुरुप्रशंसा कुशलप्रश्नादिकं च महाकाव्येषु कविभिः निबध्यते। विषयेऽस्मिन् रघुवंशसिद्धान्तशिखामण्योः साम्यं सुस्पष्टं भवति।

* * *

# ४.अलङ्कारप्राभवम्

को नाम अलङ्कारः? ‘अलङ्क्रियतेऽनेनेत्यलङ्कारः’ इति वामनः उवाच। अर्थात् प्रतिपाद्यं वस्तु उपमारूपकाद्य-लङ्कारप्रयोगपूर्वकं यदि प्रतिपाद्यते तदा तस्य लोकप्रियत्वं संभवति। सिद्धान्तशिखामणिनामकस्यास्य ग्रन्थस्य लोकप्रियत्वं एतन्मूलकमेवेति निस्संदेहं वक्तुं शक्यते।-

**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम् ।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवाः ।।**

**विप्रलम्भो विवाहश्च कुमारोदयवर्णनम् ।**
**मन्त्रद्यूतप्रयाणाजि नायकाभ्युदया अपि ।।**

**एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते।**
**एषामष्टादशानां यैः कैश्चिदूनमपीष्यते।।**

(**प्रतापरुद्रीयम्**-काव्यप्रकरणम् ६८-७०)

इति अलङ्कारशास्त्रे केषां केषां विषयाणां वर्णनं काव्ये कर्तव्यमिति निरूपितमस्ति। अष्टादशवर्णनानि अत्र सन्ति। तेषु रामायणादिकाव्येषु सर्वेषामपि वर्णनानां संघटनं घटते। परन्तु वेदान्तविषयग्रन्थेषु तन्न घटते। अथापि तेषु वर्णनेषु कानिचिद्वर्णनानि ग्रन्थेऽस्मिन् दृश्यन्ते। तद्यथा आदावेव परब्रह्मापरनामधेयस्य शिवस्य, शक्तेः, कैलासस्य, तपोनवस्य, महर्षेः अगस्त्यस्य च



हृदयङ्गमानि वर्णनानि पठितॄणां चित्तमाकर्षन्ति। कुमारसंभवेऽपि कालिदासेन **‘अस्त्युत्तरस्यां दिशि देवतात्मा’** इत्यारभ्य हिमालयः वर्णितः। तदनु पार्वतीवर्णनमपि निबद्धमस्ति। काव्येषु विवाहः, पुत्रोत्पत्तिः, युद्धं इत्यादीनां वर्णनाऽपि क्रियते। तादृशवर्णनानां वेदान्तग्रन्थेषु अवकाशः नास्ति। तथा च वर्णनीयविषयाः ये भवन्ति ते साहित्यशास्त्रनिर्दिष्टप्रक्रियामनुसृत्य श्रुतिसुभगाः यथा भवन्ति तथा विरचिताश्चेत् ग्रन्थस्य लोकोत्तरत्वं सिद्ध्यति। तादृशं लोकोत्तरत्वं सिद्धान्तशिखामणिग्रन्थे सर्वत्र दृश्यते इति वक्तुं शक्यम्।

यतः ग्रन्थकर्ता सहजप्रतिभासंपन्नः ततः अत्र कविता परमरमणीया सती सहृदयहृदयाह्लादिनी भवति। यद्यप्यत्र प्रतिपाद्यमानविषयः वेदसिद्धान्तः तथाऽपि रचनारामणीयकं पाठकानावर्जयति। अत्र उपमारूपकाद्यलङ्काराः कविना सन्दर्भानुगुणतया महता नैपुण्येन प्रयुक्ताः सन्ति। तद्यथा कविः स्वस्योत्पत्तिं कथयन् एवं ब्रवीति -

**‘तस्य वीरशिवाचार्यशिखारत्नस्य नन्दनः।**
**अभवच्छिवयोगीति सिन्धोरिव सुधाकरः।।’** (I.20) इति।

समुद्रस्य चन्द्र इव सिद्धनाथशिवाचार्यस्य नन्दनः आसीदित्यत्र उपमालङ्कारः स्पष्ट एव। अलङ्कारेषु उपमायाः प्राशस्त्यं निरुपमानं भवति। तदुक्तं **चित्रमीमांसा**कारेण अप्पय्यदीक्षितेन -

**उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् ।**
**रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ।।** इति।

कविकुलशिखामणिः शिवयोगी स्वविरचितसिद्धान्तशिखामणौ कालिदास इव उपमालङ्कारप्रयोगे सिद्धहस्तः प्रतिभाति। नीरसस्यापि विषयस्य सुरुचिरालङ्कारसंयोजनेन सरसत्वं सञ्जायते। एवमधोनिर्दिष्टेषु श्लोकेषु कविना प्रयुक्तस्य उपमालङ्कारस्य सौन्दर्यं पश्यत -

**प्रकाशते यथा नाग्निः अरण्यां मथनं विना ।**
**क्रियां विना तथान्तःस्थो न प्रकाशो भवेच्छिवः ।।**
(XVI.6)

**चक्षुर्हीनो यथा रूपं न किञ्चिद्वीक्षितुं क्षमः ।**
**भावहीनस्तथा योगी न शिवं द्रष्टुमीश्वरः ।।**(XVI.20)

**नैरन्तर्येण संपन्ने भावे ध्यातुं शिवं प्रति ।**
**तद्भावो जायते यद्वत् क्रिमेः कीटस्य चिन्तनात् ।।**
(XVI.22)

**अन्धो यथा पुरःस्थानि वस्तूनि च न पश्यति।**
**ज्ञानहीनस्तथा देही नात्मस्थं वीक्षते शिवम् ।।** (XVI.32)

**दीपं विना यथा गेहे नान्धकारो निवर्तते ।**
**ज्ञानं विना तथा चित्ते मोहोऽपि न निवर्तते ।।**(XVI.34)



**काष्ठं विना यथा वह्निः जायते न प्रकाशवान् ।**
**मूर्तिं विना तथा योगी नात्मतत्त्वप्रकाशवान् ।।**
(XVI.38)

उपमायां अनेके भेदाः सन्ति। ते च भेदाः अलङ्कारग्रन्थेषु विस्तरेण निरूपिताः। तेषु **मालोपमा** इति कश्चन भेदः वर्तते। यत्र मालारूपेण उपमानपरम्परा प्रयुज्यते तद्द्वारा उपमेयस्य स्वरूपं लोकोत्तरप्रक्रियया वर्ण्यते तत्र मालोपमेति आलङ्कारिकाः। उदाहरणार्थं पश्यत सिद्धान्तशिखामणौ षोडशे परिच्छेदे एकोनविंशः श्लोक :-

**अर्थहीना यथा वाणी पतिहीना यथा सती।**
**श्रुतिहीना यथा बुद्धिः भावहीना तथा क्रिया।।**

अत्र भावहीनक्रियायाः वैफल्यं वर्णयितुकामः कविः उपमाप्रयोगेण वर्णयति। एकेनैव उपमानेन तत् साधयितुं शक्यते। तथाऽपि श्लोकस्य चतुर्षु पादेषु पादत्रये त्रीणि उपमानानि प्रयुक्तानि। ईदृशप्रयोगस्य प्रयोजनं किमिति चेत् भावहीनायाः क्रियायाः वैयर्थ्यस्य सम्यक् निरूपणमेव। तत्र तादृशनिरूपणेन साधकः मनसि भावहीनक्रिया निष्प्रयोजनेति विज्ञाय भावसहितक्रियायामुद्युक्तो भवति। ईदृशी प्रेरणा साधकस्य श्लोके मालोपमाप्रयोगेणैव साध्यते।

उपमाभेदेषु **प्रतिवस्तूपमा** इति कश्चन भेदः विद्यते। तस्य लक्षणं तावत् -

**यत्र सामान्यनिर्देशः पृथक्वाक्यद्वये यदि।**
**गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता ।।** इति।

तत्र उपमैव प्रतिवस्तुसंयोजनविधानेन विवक्षितविषयस्य बलं ददाति। एकमुदाहरणं दीयते-

**परिज्ञाते शिवे साक्षात् को वाऽन्यमभिकांक्षति।**
**निधाने महति प्राप्ते कः काचं याचतेऽन्यतः ।।**
(XIII.6)

अत्र शिवः उपमेयं, निधिः उपमानम्। निधिः प्राप्तः यथा वा सुखं ददाति तथा शिवः परिज्ञातः सुखं ददातीति भावः। तथा च अत्र औपम्ये प्रतिवस्तुत्वं उपयुक्तमिति कृत्वा इयं प्रतिवस्तूपमा इत्युच्यते। एतादृशाः प्रतिवस्तूपमाप्रयोगाः अस्मिन् ग्रन्थे इतरत्रापि दृश्यन्ते। तद्यथा-

**शिवानन्दं समासाद्य को वाऽन्यमुपतिष्ठते।**
**गंगामृतं परित्यज्य कः कांक्षेन्मृगतृष्णिकाम् ।।**
(XIII.7)

**संसारतिमिरच्छेदे विना शङ्करभास्करम् ।**
**प्रभवन्ति कथं देवाः खद्योता इव देहिनाम् ।।** (XIII.8)

विषयप्रतिपादने दृढत्वसंपादनार्थ कदाचिदलङ्कारः प्रयुज्यते। अलङ्कारेषु **परिकरः** इति कश्चन अलङ्कारः। तस्य लक्षणमिदम् -



**'अलङ्कारः परिकरः साभिप्राये विशेषणे'** - इति। अर्थात् विशेष्यपदमुद्दिश्य प्रयुक्तानि विशेषणानि साभिप्रायाणि भवन्ति चेत् परिकरालङ्कारः इति भावः। उदाहरणं यथा -

**मलकोशे शरीरेऽस्मिन् महादुःखविवर्धने ।**
**तटिदङ्कुरसंकाशे को वा रुच्येत पण्डितः ।।** (V.72)

अस्मिन् श्लोके शरीरपदं विशेष्यम्। तत्र त्रीणि विशेषणानि-मलकोशे इति, महादुःखविवर्धने इति, तटिदङ्कुरसंकाशे इति च। त्रीण्यपि विशेषणानि साभिप्रायाण्येव। प्रथमविशेषणं शरीरे असह्यताबुद्धिं जनयति, द्वितीयं विशेषणं परिहरणीयत्वं द्योतयति, तृतीयं विशेषणं अशाश्वतत्वं स्फोरयति। एवं त्रीण्यपि विशेषणानि शरीरे बुद्धिमान् रुचिं न धत्ते, अर्थात् शरीरविषये विरक्तो भवतीति ज्ञापयन्ति। वेदान्तग्रन्थेषु श्रोता यथा संसारविषये वैराग्यं भजते तथा विषयवैरस्यप्रतिपादनं आवश्यकं भवति। तादृशं प्रतिपादनं अत्र कविः परिकरालङ्कारप्रयोगेण साधयामास।

उपमालङ्कारानन्तरं अलङ्कारेषु रूपकालङ्कारः प्राधान्यं भजते। उपमानोपमेययोः अभेदः अत्र निरुप्यते। अत्र श्लोकद्वयं उदाहरणार्थं दीयते।

**मथिताच्छास्त्रजलधेर्युक्तिमन्थानवैभवात् ।**
**गुरुणा लभ्यते बोधसुधा सुमनसां गणैः ।।** (XIX-13)
**ज्ञानचन्द्रसमुद्भूतां परमानन्दचन्द्रिकाम् ।**
**पश्यन्ति परमाकाशे मुक्तिरात्रौ महाधियः ।।**(XIX-14)

अत्र बोधामृतप्राप्तिः वर्ण्यते। बोधशब्दः उपमेयं, अमृतशब्दः उपमानम्। बोध एव अमृतमिति तयोः अभेदः परिकल्पितः। अमृतं तावत् समुद्रमथनात् उद्भूतमिति पौराणिकी कथा। तां कथां मनसि निधाय अत्र कविः सावयवरूपकं प्रयुनक्ति। शास्त्रमेव जलधिः। जलधौ मथनं शास्त्रे मननं च आवश्यकम्। मथनार्थं मन्थनदण्डः आवश्यकः। अत्र युक्तिरेव मन्थनदण्डः। तथा मथने कृते सति सुमनसां गणैः देवानां गणैः इत्येकः अर्थः, विबुधानां गणैरिति अपरः अर्थः। तथा अमृतप्राप्तिः साध्यते इति भावः। अत्र समुनसां इत्यत्र श्लेषः प्रयुक्तः। तस्मादत्र विद्यमानः अलङ्कारः श्लोषानुप्राणितः। शास्त्रं, युक्तिः, पण्डिताः, बोधः, इत्येकतः, जलधिः, मन्थनदण्डः, देवाः, अमृतमित्यपरतः प्रतिपादितानां वस्तूनां अभेदसाधनेन रूपकस्य सावयवत्वात् इदं सावयवरूपकमित्युच्यते। अत्र ग्रन्थकर्ता नीरसमपि वेदान्तविषयं अलङ्कारकल्पनेन सरसं करोति। अलङ्कारशास्त्रसाहाय्येन वाचां वैचित्र्यं संपन्नं भवति। तद्वैचित्र्यं पाठकानाकर्षति। तेषामभिमुखीकरणं अनेन विधानेन सम्पद्यते।

तदनन्तरश्लोकेऽपि रूपकालङ्कारप्रक्रिया ग्रन्थकर्त्रा निर्व्यूढा। तद्यथा ज्ञानं उपमेयपदं, चन्द्रः उपमानम्। ज्ञानात् जायमानः परमानन्दः चन्द्रात् जायमानया चन्द्रिकया उपमीयते। महाधियः नाम बुद्धिमन्तः। रात्रावेव चन्द्रः प्राकशते। ततः मुक्तेः रात्रित्वं परिकल्पितम्। आकाशे एव चन्द्रिका प्रसरति। अत्र परतत्त्वमेव आकाशः। आकाशस्य परब्रह्मस्वरूपत्वं प्रसिद्धमेव। भूताकाशोऽपि



परमात्मनः एव समुत्पन्नः इति **'आत्मनः आकाशः संभूतः'** इति उपनिषद्वचनात् ज्ञायते। अत्र चन्द्रः, चन्द्रिका, रात्रिः, आकाशः इति उपमानपरस्परा, ज्ञानं, परमानन्दः, मुक्तिः, परतत्त्वम् इति उपमेयपरम्परा च अभेदप्रक्रियया वर्ण्येते इति कृत्वा इदमपि सावयवरूपकेऽन्तर्भवति। एवमयं ग्रन्थकर्ता पदे पदे तत्त्वप्रतिपादनार्थं आलङ्कारिकीं प्रक्रियां अनुसरतीति ज्ञेयम् ।

* * *

## ५.रसास्वादभेदाः पाकाः

अलङ्कारशास्त्रे त्रयः पाकाः सुप्रसिद्धाः। ते च द्राक्षापाकः, कदलीपाकः, नारिकेलपाकश्चेति। रसनायां निक्षिप्ता द्राक्षा यथा सपदि आस्वादं जनयति तथा श्रवणानन्तरमेव अर्थावगमे आह्लादने च निरूढा रचना द्राक्षापाकवती भवति। कदलीफलवत्किञ्चित् श्रमसाध्यत्वे कदलीपाक इत्युच्यते। नारिकेलवत् श्रमैकसाध्यत्वे नारिकेलपाकः इत्युच्यते। नैषधादिकाव्यानि नारिकेलपाकत्वेन प्रसिद्धान्येव। सिद्धान्तशिखामणौ न कुत्रचिन्नारिकेलपाकः दृश्यते। द्राक्षापाकः कदलीपाक एव सर्वत्र अनुभूयेते।

प्राचीनैः भरतादिभिः अष्टावेव रसाः परिगणिताः। तदनन्तरकालीनैः आलङ्कारिकैः शान्तस्यापि रसत्वं साधितम्। तदुक्तं -'शान्तोऽपि नवमो रसः' इति। किन्तु तदनन्तरकालिकैः भक्तिप्रचारकैः काव्यज्ञैः भक्तेरपि रसत्वमङ्गीकृतम्। भक्तिरसवैशिष्ट्यं प्रतिपादयद्भिः तैः **भक्तिरसायन**मित्यादयः केचन ग्रन्थाः विलिखिताः। यदि भक्तेः रसत्वं सर्वात्मना अङ्गीक्रियते तदा सिद्धान्तशिखामणौ शिवभक्तिः एवं गुरुभक्तिः सम्यक् प्रतिपादिता वर्तते। तत्र भक्तानां वचनेषु शिवभक्तिः, शिष्याणां वचनेषु गुरुभक्तिश्च स्पष्टमनुभूयेते। तद्यथा रेणुकागस्त्ययोः संगमे रेणुकं दृष्ट्वा अगस्त्यः तस्मिन् स्वभक्तिं अधोनिर्दिष्टेश्लोकैः स्पष्टं प्रतिपादयति-

**इति तस्य वचः श्रुत्वा सिद्धस्य मुनिपुङ्गवः।**
**गंभीरगुणया वाचा बभाषे भक्तिपूर्वकम् ॥** (IV.45)



**अहमेव मुनीन्द्राणां लालनीयोऽस्मि सर्वदा ।**
**भवदागमसंपत्तिः मां विना कस्य संभवेत् ॥** (IV.46)

**स्थिरमद्य शिवज्ञानं स्थिरा मे तापसक्रिया ।**
**भवद्दर्शनपुण्येन स्थिरा मे मुनिराजता ॥**(IV.47)

**संसारसर्पदष्टानां मूर्छितानां शरीरिणाम् ।**
**कटाक्षस्तव कल्याणं समुज्जीवनभेषजम् ॥** (IV.48)

**समस्तलोकसंदाहतापत्रयमहानलः।**
**त्वत्पादाम्बुकणास्वादादुपशाम्यति देहिनाम् ॥** (IV.49)

**रेणुकं त्वां विजानामि गणनाथं शिवप्रियम् ।**
**अवतीर्णमिमां भूमिं मदनुग्रहकांक्षया ॥** (IV.50)

**भवादृशानां सिद्धानां प्रबोधध्वस्तजन्मनाम् ।**
**प्रवृत्तिरीदृशी लोके परानुग्रहकारिणी ॥** (IV.51)

अत्र सर्वत्र द्राक्षापाक एव श्रुतिगोचरो भवति। तस्य पाकस्य लक्षणं तु -**'द्राक्षापाकः स कथितः बहिरन्तःस्फुरद्रसः'** इति प्रतापरुद्रीये काव्यप्रकरणे संलक्षितम्। अत्र प्रस्तुतेषु श्लोकेषु यानि वचनानि श्रूयन्ते तैः वचनैः अगस्त्यस्य रेणुके स्थिता गुरुभक्तिः स्पष्टं प्रकटीकृता। तथा च इमे श्लोकाः श्रवणमात्रेण अर्थावगमं जनयन्तीति भक्तिरसं द्योतयन्तीति च हेतोः द्राक्षापाकस्य उदाहरणभूताः भवन्ति।

तथैव ग्रन्थेऽस्मिन् एकविंशे परिच्छेदेऽपि रेणुकविभीषणयोः

समावेशे भक्तिप्रधानानि निभीषणस्य वचनानि द्राक्षपाकसंवलितानि श्रूयन्ते। यद्यथा पश्यन्तु -

विभीषणः=

**मद्भाग्यगौरवादद्य समायास्त्वं पुरीमिमाम् ।**
**कथं भाग्यविहीनानां सुलभाः स्युर्भवादृशाः ॥**(XXI.9)

**मत्समो नास्ति लोकेषु भाग्यातिशयवत्तया।**
**यस्य गेहं स्वयं प्राप्तो भवान् साक्षान्महेश्वरः ॥**(XXI.10)

**कृतार्था मे पुरी ह्येषा कृतार्थो राक्षसान्वयः।**
**जीवितं च कृतार्थं मे यस्य त्वं दृष्टिगोचरः ॥**(XXI.11)

रेणुकः=

**विभीषण! महाभाग! जाने त्वां धर्मकोविदम् ।**
**त्वां विना कस्य लोकेषु जायते भक्तिरीदृशी ॥** (XXI.13)

इति। अत्र सर्वत्र भक्तिरसप्रपूरितः द्राक्षापाकः एव स्पष्टमनुभूयते।

तत्रैव किंचित् श्रमेण यत्र श्लोकस्य अर्थावगतिः साध्या भवति तत्र कदलीपाकः इति आलङ्कारिकाः। तद्यथा सिद्धान्तशिखामणौ -

**नित्यानित्यविवेकिनः सुकृतिनः शुद्धाशयस्यात्मनो**
**ब्रह्मोपेन्द्रमहेन्द्रमुख्यविभवेष्वस्थायितां पश्यतः।**
**नित्यानन्दपदे निराकृतजगत्संसारदुःखोदये**
**साम्बे चन्द्रशिरोमणौ समुदयेद्भक्तिर्भवध्वंसिनी ॥**(V.77)



**नित्ये निर्मलसत्त्वयोगिषु परे निर्वासने निष्कले**
**सर्वातीतपदे चराचरमये सत्तात्मनि ज्येतिषि।**
**संविद्व्योम्नि शिवे विलीनहृदयस्तद्भेदवैमुख्यतः**
**साक्षात्सर्वगतो विभाति विगलद्विश्वः स्वयं संयमी॥**

(XIX.97)

इत्यादिश्लोकानां अल्पश्रमेणैव अर्थावगमः अनुभूयते इति वक्तुं शक्यते।

* * *

## ६.उत्कर्षावहाः गुणाः रीतयश्च

काव्ये तावत् -

**‘श्लेषःप्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वं ओजःकान्तिसमाधयः।।’** इति

दश गुणाः साहित्यशास्त्रे निर्दिष्टाः। एते शब्दगतत्वेन अर्थगतत्वेनेति द्विधा विभक्ताः। अत्र प्रसादो नाम गुणः अत्यन्तं विशिष्टः। झटित्यर्थप्रतीतिदायकत्वमेव प्रसादः इति तस्य लक्षणं प्रत्यपादि। अर्थात् श्रवणमात्रेण व्याख्यानापेक्षां विना पाठकस्य श्रोतुर्वा अर्थावगमनं शीघ्रमेव भवति चेत् स काव्यघट्टः प्रसादलक्षणलक्षित इत्युच्यते । यथा -

**चन्द्रकान्ते यथा तोयं सूर्यकान्ते यथाऽनलः।**
**बीजे यथाङ्कुरः सिद्धः तथात्मनि शिवः स्थितः।।** (V. 36)

**प्रसादादेव सा भक्तिः प्रसादो भक्तिसंभवः।**
**यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः।।** (IX. 11)

**शिवसंस्कारयुक्तेषु जातिभेदो न विद्यते ।**
**काष्ठेषु वह्निदग्धेषु यथारूपं न विद्यते ।।**

**गुरुरेव परं त्तत्वं प्रकाशयति देहिनाम् ।**
**को वा सूर्यं विना लोके तमसो विनिवर्तकः।।**
(XIII.23)



काव्येषु तिस्रः रीतयः सन्ति। ताश्च वैदर्भी, गौडी, पाञ्चाली चेत्युच्यन्ते। विदर्भ, गौड, पाञ्चालदेशस्थैः जनैः अधिकतया आदृतत्वात् प्रथमतः तत्तद्देशनाम्ना इमाः रीतयः प्रसिद्धाः। कालक्रमेण कविभिः सर्वैरपि सन्दर्भानुगुणतया एताः रीतयः काव्येषु प्रयुक्ताः। एतासु रीतिषु वैदर्भी सुप्रशस्ता इति श्रूयते। ‘समग्रगुणोपेता वैदर्भी’ इति तस्याः लक्षणम्। अर्थात् सर्वेऽपि गुणाः यत्र सन्निहिता भवन्ति तादृशी रचना वैदर्भीलक्षलक्षिता भवति। प्रायशः कालिदासस्य कवित्वे वैदर्भीरीतिरधिकतया दृश्यते इति काव्यहृदयवेदिनः कथयन्ति। तत्र काव्ये दश गुणाः उक्ताः । एकैकस्यापि गुणस्य लक्षणं उदाहरणानि च अलङ्कारशास्त्रेषु बहुत्र निरूपितानि सन्ति।

सिद्धान्तशिखामणेः रचनापरिशीलनेन इदं ज्ञायते यत् अस्य कर्ता आधिक्येन वैदर्भीरीतिमेवानुससारेति। उदाहरणार्थमत्र उद्धरिष्यमाणेषु श्लोकेषु पूर्वोक्तगुणेषु अनेके संमिश्रिताः सन्तीति हेतोः वैदर्भीरीतिरत्र गोचरीभवति।-

**नित्ये निर्मलभावने निरुपमे निर्धूतविश्वभ्रमे**
**सत्तानन्दचिदात्मके परशिवे साम्यं गतः संयमी।**
**प्रध्वस्ताश्रमवर्णधर्मनिगलः स्वच्छन्दसंचारवान्**
**देहीवाद्भुतवैभवो विजयते जीवन्विमुक्तः सुधीः।।** (XV.71)

## ७. रसस्फूर्तिः

केचित् लक्षणकाराः काव्यस्य लक्षणं वदन्तः 'शब्दार्थौ सहितौ काव्य'मिति ऊचुः। अन्यैश्च प्रकारान्तरेणैव काव्यलक्षणं प्रतिपादितम्। उक्तं हि विश्वनाथेन 'वाक्यं रसात्मकं काव्य'मिति। जगन्नाथेन तु 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति अर्थरामणीयकं मनसि निधाय तत्प्रतिपादकः शब्द एव काव्यमित्युक्तम्। किन्तु काव्ये रसस्फूर्तेः प्रामुख्यं सर्वैरपि आलङ्कारिकैः अङ्गीकृतमेव। ध्वनिकारादिभिश्च व्यङ्ग्यवैभवस्य प्राधान्यं प्रतिपादयद्भिः रसध्वनेः एव वस्तुध्वन्यलङ्कारध्वन्यपेक्षया प्राधान्यं प्रत्यपादि।

तत्र रसः वाचा वक्तुं न शक्यते। व्यञ्जनावृत्त्यैव रसध्वनिः साधयितुं शक्यते। ते च रसा :-

**शृङ्गारहास्यकरुण रौद्रवीरभयानकाः।**
**बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः।।** इति

शृङ्गारमारभ्य शान्तपर्यन्तं नवरसाः निर्दिष्टाः।

आलङ्कारिकेषु अग्रगण्येन भरतेन नाट्यशास्त्रकर्त्रा शृङ्गारादयः अष्टावेव रसाः निर्दिष्टाः। परन्तु तदनन्तरकालिकैः लाक्षणिकैः शान्तस्यापि रसत्वमङ्गीकृतम्। तदुक्तं - 'शान्तोऽपि नवमो रसः' इति। रतिहासादयः शृङ्गारादीनामिव शमः शान्तस्य स्थायिभावो भवति।



अभिनये शृङ्गारादीनामिव शान्तस्य प्रदर्शनं असाध्यमिति धिया अतिप्राचीनैरालङ्कारिकैः शान्तं विहाय अष्टावेव रसाः इत्युक्तम्। किन्तु प्राचीनसारस्वतपरिशीलनेन शमदमादिगुणसंपन्नानां वीतरागिणां ब्रह्मनिष्ठानां स्थितप्रज्ञानां ऋषीणां जीवितं शान्तिपूर्णं भवतीति हेतोः शान्तस्यापि प्रदर्शनं कर्तुं शक्यमेवेति धिया तस्य रसत्वमङ्गीकृतम् ।

सिद्धान्तशिखामणौ आध्यात्मिकमार्गे पदं निधाय जीवितं यापयतां गुरूणां शिष्याणां च प्रवृत्तिं वर्णयन् कविः तेषां शमस्थितिं प्रतिपाद्य पठितॄणां शान्तरसस्फूर्तिं जनयति। तद्यथा चतुर्थे परिच्छेदे अगस्त्यमुनेः आश्रमस्य (IV. 17-24) तथा मलयाचलस्य (IV. 14-16) च वर्णनासन्दर्भे तत्रस्थ तरुगुल्मलतानां मृगपक्षिगणानां च चित्रणं शान्तरसमुद्दीपयति। तथैव तत्र तत्र परमात्मना शिवेन सह समरसभावं प्राप्तुं लिङ्गार्चने निरतानां भक्तानां स्वरूपस्वभावान्निरूपयन् शिवयोगि शिवाचार्यः शान्तरस्फोरकान् विभावानुभावान् उपस्थापयति।

काव्ये व्यञ्जनाव्यापारस्य प्राधान्यं सर्वैरप्यङ्गीकृतम्। तत्रापि कविः वस्त्वलङ्कारध्वन्यपेक्षया रसध्वनावेव अवधानवान् भवेदिति आलङ्गारिकाणां निर्देशः। तदुक्तं **ध्वन्यालोके** चतुर्थोद्योते-

**व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे संभवत्यपि।**
**रसादिमय एकस्मिन् कविः स्यादवधानवान्।।** इति।

तत्र नवसु रसेषु स्थितेष्वपि प्रबन्धे अङ्गी रसः एक एव उपनिबद्धव्यः इति अलङ्कारशास्त्रनिपुणाः वदन्ति। रामायणे करुणो रसः 'शोकः श्लोकत्वमागतः' इत्युक्तरीत्या प्राधान्यं भजते। महाभारते तु वृष्णिपाण्डवविरसावसानवैमनस्यदायिनी समाप्तिः वैराग्यं, तद्द्वारा मोक्षलक्षणः पुरुषार्थः, शान्तो रसश्च प्रधान्यं भजन्ते। उक्तं च ध्वनिकारेण-

**'ततश्च शान्तो रसो रसान्तरैः मोक्षलक्षणः पुरुषार्थः पुरुषार्थान्तरैः तदुपसर्जनत्वेन अनुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते।'**

तथा च सिद्धान्तशिखामणावपि शान्तो रस एव प्राधान्येन ग्रन्थे सर्वत्र उपनिबद्धो दृश्यते। एतन्निरूपणार्थं अनेकाः उपपत्तयो-निर्देष्टुं शक्यन्ते।

वीरशैवसिद्धान्ते वीरशैवधर्मनिष्ठः मुमुक्षुः भक्तः शिवभक्तिलभ्यशिवैक्यरूपपरमुक्तिं साधयितुं भक्त-माहेश्वर-प्रसादि-प्राणालिङ्गि-शरण-ऐक्यनामक षट्स्थल सोपानमार्ग-मधिरुह्य परमप्रयोजनरूपां परब्रह्मणा सह समरसस्थितिं प्राप्नोति। स साधकः मलसहितां जीवभावनां उत्सृज्य निर्दिष्टसदाचारयुक्तः सन् परमात्मभावनां संपाद्य मुक्तिमधिगच्छति। अतः तत्तत्स्थल-निर्दिष्टानि लक्षणानि तस्याध्यात्मिकोन्नतिं परामृशन्तीति कृत्वा तत्स्थललक्षणानि निरूपयन्ति।



आदौ पञ्चमपरिच्छेदे भक्तस्थलं एवं संलक्षितम्

**शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते।**
**तस्यानुष्ठेयधर्माणा मुक्तिर्भक्तस्थलं मतम् ।।** (V.26)

इति। तदनन्तरं दशमे परिच्छेदे माहेश्वराभिधस्य साधकस्य स्वरूपं एवं निरूपितं रेणुकमहात्मना -

**केवले सहजे दाने निष्णातः शिवतत्परः।**
**ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः।।** (X-2)

**भक्तेर्यदा समुत्कर्षो भवेत् वैराग्यगौरवात् ।**
**तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान् ।।**(X-3) इति।

स एव साधकः अभ्यासबलेन प्रसादीति अख्यायते इति निरूपयति एकादश परिच्छेदे। यथा-

**लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः।**
**मनः प्रसादयोगेन प्रसादीत्येष कथ्यते।।** इति। (XI.2)

द्वादशपरिच्छेदे प्रसादिनामको भक्तः प्राणलिङ्गी भवतीत्युच्यते। तस्य लक्षणं तावत्-

**भक्तो माहेश्वरश्चैष प्रसादीति च कीर्तितः।**
**कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्य कथ्यते।।** (XII.2)

**लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी।**
**तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते।।** (XII.3)

तदनन्तरं स एव साधकः शरणनाम्ना अभिधीयते त्रयोदशपरिच्छेदे।

**अङ्गलिङ्गी ज्ञानरूपः सती ज्ञेयः शिवः पतिः।**
**यत्सौख्यं तत्समावेशे तद्वान् शरणनामवान् ॥**(XIII.2) इति

अन्तिमे चतुर्दशे परिच्छेदे स साधकः निर्दिष्टशीलसम्पादनेन शिवेन सह ऐक्यमाप्नोतीति हेतोः सः ऐक्यवान् इत्याचक्षते । तदेवाह -

**प्राणलिङ्गादियोगेन सुखातिशयमेयिवान् ।**
**शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत् ॥** (XIV.2)
इति।

वीरशैवसाधकानां कृते गुरुणा लिङ्गधारणक्रिया मोक्षसाधनोपायत्वेन निर्दिष्टा। तद्द्विविधं बाह्यमाभ्यन्तरं चेति।

**लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकैः।**
**बाह्यमाभ्यन्तरं चेति मुनिभिर्मोक्षकाङ्क्षिभिः॥** (VI.30) इति।

शरीरस्योपरि कण्ठे वा अंसे वा शिरसि वा शिवलिङ्गधारणं बाह्यमिति उच्यते। चिद्रूपस्य शिवलिङ्गस्य मनसि धारणं आन्तरिकं इति एवमुक्तम्-

**चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम् ।**
**यत्तस्य धारणं चित्ते तदान्तरमुदाहृतम् ॥** (VI. 31)

बाह्यलिङ्गं तावत् अभिषेकैः भस्मबिल्वादिभिः अर्चयितुं शक्यते, आन्तरिकं लिङ्गार्चनं कथं कर्तव्यमिति प्रश्ने कृते तदर्चनाविधानं द्वादशपरिच्छेदे प्राणलिङ्गार्चनस्थले एवं निरूपितमस्ति-



**अन्तर्गतं चिदाकारं लिङ्गं शिवमयं परम् ।**
**पूज्यते भावपुष्पैर्यत् प्राणलिङ्गार्चनं हि तत् ॥**(XII-13)

**अन्तः पवनसंस्पृष्टे सुसूक्ष्माम्बरशोभिते ।**
**मूर्धन्यचन्द्रविगलत्सुधासेकातिशीतले ॥** (XII-14)

**बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये ।**
**पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम् ।**
**भावयित्वा सदाकालं पूजयेत् भाववस्तुभिः॥**(XII-15)

**क्षमाभिषेकसलिलं विवेको वस्त्रमुच्यते।**
**सत्यमाभरणं प्रोक्तं वैराग्यं पुष्पमालिका ॥** (XII-16)

**गन्धः समाधिसंपत्तिरक्षता निरहङ्कृतिः।**
**श्रद्धा धूपो महाज्ञानं जगद्भासि प्रदीपिका॥** (XII-17)

**भ्रान्तिमूलप्रपञ्चस्य निवेद्यं तन्निवेदनम् ।**
**मौनं घण्टापरिस्पन्दस्ताम्बूलं विषयार्पणम् ॥**(XII-18)

**विषयभ्रान्तिराहित्यं तत्प्रदक्षिणकल्पना ।**
**बुद्धेस्तदात्मिका शक्तिः नमस्कारक्रिया मता॥**(XII-19)

**एवं विधैर्भावशुद्धैरुपचारैरदूषितैः।**
**प्रत्युन्मुखमना भूत्वा पूजयेल्लिङ्गमान्तरम्॥**(XII-20) इति।

वीरशैवसंप्रदाये मुमुक्षुः साधकः, शिष्यः, शरणः, जङ्गमः, शिवयोगी इत्यादिशब्दैः अभिधीयते। तच्छब्देषु किंचिद्वैलक्षण्यं दृश्यते इति धिया तेषां स्वरूपमत्र प्रस्तूयते। सप्तदशपरिच्छेदे

शिष्यस्थले शिष्यः एवं निरूपितः -

**शासनीयो भवेद्यस्तु परकायेन सर्वदा।**
**तत्प्रसादात्तु मोक्षार्थी स शिष्य इति कीर्तितः।**(XVII.58)

**शान्तो दान्तस्तपश्शीलः सत्यवाक् समदर्शनः।**
**गुरौ शिवे समानस्थः स शिष्याणामिहोत्तमः॥**(XVII.60)

**गुरोर्लब्ध्वा महाज्ञानं संसारमलभेषजम् ।**
**मोदते यः सुखी शान्तः स जीवन्मुक्त एव हि ॥** (XVII.67)

**श्रुत्वा श्रुत्वा गुरोर्वाक्यं शिवसाक्षात्क्रियावहम् ।**
**उपशाम्यति यः स्वान्ते स मुक्तिपदमाप्नुयात् ॥** (XVII.70)

एकादशपरिच्छेदे शरणः एवं निरूपित :-

**ब्रह्मादिविबुधान् सर्वान् मत्वा प्राकृतवैभवान् ।**
**प्रपद्यते शिवं यत्तु शरणं तदुदाहृतम् ॥** (XI.58)

**शरण्यः सर्वभूतानां शङ्करः शशिशेखरः।**
**सर्वात्मना प्रपन्नस्तं शरणागत उच्यते ॥** (XI.59)

**विमुक्तभोगलालस्यो देवतान्तरनिस्पृहः।**
**शिवमभ्यर्थयन् मोक्षं शरणार्थीति गीयते ॥**(XI.60) इति।

तस्मिन्नेव परिच्छेदे जङ्गमानां स्वरूपमेवं संलक्षितम्:-

**जानन्त्यतिशयाद्ये तु शिवं विश्वप्रकाशकम् ।**
**स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः॥** (XI.36) इति।



तत्रैव शिवयोगी अपि संलक्षितः ।

**ये पश्यन्ति जगज्जालं चिद्रूपं शिवयोगतः।**
**निर्धूतमलसंस्पर्शाः ते स्मृताः शिवयोगिनः॥** (XI.37)

**घोरसंसारतिमिरपरिध्वंसनकारणम् ।**
**येषामस्ति शिवज्ञानं ते मताः शिवयोगिनः॥** (XI. 38)

**जितकामा जितक्रोधा मोहग्रन्थिविभेदिनः।**
**समलोष्टाश्मकनकाः साधवः शिवयोगिनः॥** (XI.39)

**समाः शत्रौ च मित्रे च साक्षात्कृतशिवात्मकाः।**
**निःस्पृहा निरहंकारा वर्तन्ते शिवयोगिनः॥** (XI.40)

पुनः सप्तदशपरिच्छेदे प्राणानुग्रहस्थले शिवयोगिस्वरूपमेवं प्रदर्शितम् -

**शिवस्य परकायस्य यत्तात्पर्यावलोकनम् ।**
**तत्प्राणानुग्रहः प्रोक्तः सर्वेषां तत्त्वदर्शिभिः॥** (XVII.24)

**प्राणो यस्य लयं याति शिवे परमकारणे ।**
**कुतस्तस्येन्द्रियस्फूर्तिः कुतः संसारदर्शनम् ॥** (XVII.25)

**करणेषु निवृत्तेषु स्वार्थसङ्गात् प्रयत्नतः।**
**तैः समं प्राणमारोप्य स्वान्ते शान्तमतिः स्वयम् ॥**
(XVII.26)

**शान्तत्वात्प्राणवृत्तीनां मनः शाम्यति वृत्तिभिः।**
**तच्छान्तौ योगिनां किंचित् शिवादन्यन्न दृश्यते।।**

(XVII.27)

तत्रैव विंशे परिच्छेदे स्वपराङ्गस्थले परमात्मना एकीभूतस्य शान्तचित्तस्य साधकस्य स्थितिः एवं निरूपिता -

**अप्रमेये चिदाकारे ब्रह्मण्यद्वैतवैभवे ।**
**विलीनः किं नु जानाति स्वात्मानं परमेव वा ।।**(XX.48)

**यत्र नास्ति भिदायोगात् अहं त्वमिति विभ्रमः।**
**न संयोगो वियोगश्च न ज्ञेयज्ञातृकल्पना।।** (XX.49)

**न बन्धो न च मुक्तिश्च न देवाद्यभिमानिता ।**
**न सुखं नैव दुःखं च नाज्ञानं ज्ञानमेव वा ।।** (XX.50)

**नोत्कृष्ट्त्वं न हीनत्वं नोपरिष्टान्न चाप्यधः।**
**न पश्चान्नैव पुरतो न दूरे किञ्चिदन्तरे ।।** (XX.51)

**सर्वाकारे चिदानन्दे सत्यरूपिणि शाश्वते ।**
**पराकाशमये तस्मिन् परे ब्रह्मणि निर्मले ।।** (XX.52)

**एकीभावमुपेतानां योगिनां परमात्मनाम् ।**
**परापरपरिज्ञानपरिहासकथा कुतः।।** (XX.53)

तत्रैव ज्ञानशून्यस्थले जीवात्मपरमात्मनोरैक्यस्थितिः एवं निरूपिता। यथा-



**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम् ।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते ।।** (XX.61)

स्वस्वरूपज्ञानिनां त्रिपुटीमयप्रपञ्चज्ञानं विनश्य सर्वं शून्ये लयं यातीति निरूपितम्-

**ज्ञेयाभावाद्विशेषेण शून्यकल्पं विभाव्यते ।**
**ज्ञातृज्ञेयादिभिःशून्यं शून्यं ज्ञानादिभिर्गुणैः।।** (XX.66)

**आदावन्ते च मध्ये च शून्यं सर्वत्र सर्वदा ।**
**द्वितीयेन पदार्थेन शून्यं शून्यं विभाव्यते ।।** (XX.67)

**केवलं सच्चिदानन्दप्रकाशाद्वयलक्षणम् ।**
**शून्यकल्पं पराकाशं परब्रह्म प्रकाशते ।।** (XX.68)

स्थितिरियमेव मोक्ष इत्यभिहितमिति निरूपितं च ।

**यस्य कार्यदशा नास्ति कारणत्वमथापि वा।**
**शेषत्वं नैव शेषित्वं स मुक्तः पर उच्यते।।** (XX.70)इति।

एतैः प्रमाणैः निश्चप्रचं इदं वक्तुं शक्यते यत् सिद्धान्तशिखामणौ कविः महता प्रयासेन शान्तरसमेव तद्द्वारा मोक्षप्राप्तिमेव मुख्यतया उद्दिश्य ग्रन्थनिर्माणं चकारेति।

* * *

# ८.छन्दोवैविध्यम्

तत्र लौकिकछन्दसि षड्विंशतिः भेदाः सन्ति इति **वृत्तरत्नाकरे** प्रोक्तम् -

**आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः।**
**पृथक् छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतम् ॥**

इति। अक्षरसंख्यामनुसृत्य अयं भेदः प्रोक्तः। तत्रापि एकैकस्मिन् भेदे अवान्तरभेदाः सन्ति। तेषु सर्वेषु भेदेषु अनुष्टुप्छन्दः एव अत्यन्तं प्रसिद्धमस्ति। आदिकविः वाल्मीकिः अनुष्टुप् छन्दसि प्राधान्येन रामायणं रचयामास। पुराणादिष्वपि इयं परिपाटी दृश्यते। अनुष्टुप्छन्दोबद्धस्य श्लोकस्य पठनेन श्रवणेन च अर्थावगमः सुलभो भवति। तत्र सुदीर्घसमासानां स्रग्धरादिवृत्तेष्विव प्रयोगस्य अवकाशो नास्ति किल। तस्मादनुष्टुप्छन्दःप्रयोगेण सिद्धान्तशिखामणौ प्रश्नोत्तररीत्या संघटिता रचना पठितॄन् सर्वानपि आकर्षतीत्यत्र न संदेहः॥

काव्यनिर्माणपरिपाटीमिमां मनसि निधाय शिवयोगि-शिवाचार्यः एकविंशतिपरिच्छेदात्मके सिद्धान्तशिखामणिनामके दार्शनिके काव्ये अनुष्टुप्छन्द एव आदृतवान्। महाकाव्य-लक्षणमनुसृत्य परिच्छेदानामन्ते विवधानि छन्दांसि प्रयुक्तवान्। काव्यस्यास्य बाह्यस्वरूपं अत्र परिशीलयामः।

सिद्धान्तशिखामणौ द्वात्रिंशत् श्लोकात्मकप्रथम



परिच्छेदस्य[१] तथैव एकोनपञ्चाशच्छ्लोकमयस्य अष्टमपरिच्छेदस्य[२] च अन्तिमश्लोकौ मालिनीवृत्ते निबद्धौ स्तः। तस्य लक्षणं तावत्-

**'ननमयययुतेयं मालिनी भोगिलोकैः'**(VR.III.15-4)

इति। अर्थात् नगणद्वयं मगणः यगणद्वयं इति क्रमेण पञ्चगणाः स्युः। तत्र अष्टभिः सप्तभिर्वर्णैः यतिनियमः पालनीयः। यतिर्नाम पदसमाप्तिरिति अवगन्तव्यम्। अतः श्लोकेऽस्मिन् 'अनुगतसकलार्थे' इति वर्णाष्टकैः प्रथम विरामः, तदनन्तरं सप्तभिर्वर्णैः 'शैवतन्त्रैः समस्तै' इति द्वितीयः विरामः। आहत्यास्मिन् वृत्ते एकस्मिन् पादे पञ्चदशवर्णाः निबद्धा वर्तन्ते। लक्षणमिदमवशिष्टेषु पादेष्वपि अनुसृतम्।

त्रयस्त्रिंशच्छ्लोकात्मकःद्वितीयपरिच्छेदः[३], त्रिषष्टिश्लोकैरुपेतः षष्ठः परिच्छेदः[४], सप्तषष्टिश्लोकसमेतश्च

---

१. अनुगतसकलार्थे शैवतन्त्रैः समस्तैः
प्रकटितशिवबोधाद्वैतभावप्रसादे।
विदधतु मतिमस्मिन् वीरशैवाः विशिष्टाः
पशुपतिमतिसारे पण्डितश्लाघनीये ॥ (I. 32)

२. किमिह बहुभिरुक्तैर्मन्त्रमेवं महात्मा
प्रणवसाहितमादौ यस्तु पञ्चाक्षराख्यम् ।
जपति परमभक्त्या पूजयन् देवदेवं
स गतदुरितबन्धो मोक्षलक्ष्मीं प्रयाति ॥ (VIII.49)

३. गणेश्वरौ रेणुकदारुकावुभौ। (II.33)

४. यो लिङ्गधारी नियतान्तरात्मा। (VI.63)

सप्तमपरिच्छेदः[१], सप्तत्रिंशच्छ्लोकपूर्णः त्रयोदशपरिच्छेदः[२] वंशस्थवृत्तनिबद्धश्लोकैः समाप्यन्ते। **वृत्तरत्नाकरः** वंशस्थमेवं लक्षयति -

**'जतौ तु वंशस्थमुदीरितं जरौ'** (III.12.2.)इति।

द्वादशवर्णात्मकेऽस्मिन् वृत्ते जगण-तगण,जगण-रगणाः भवेयुः।

अष्टाशीतिश्लोकात्मकः तृतीयपरिच्छेदः[३], सप्तसप्ततिश्लोकपूर्णः पञ्चमपरिच्छेदः[४], एकसप्ततिश्लोकात्मकः पञ्चादशपरिच्छेदः[५], षडशीतिश्लोकात्मकः सप्तदशः परिच्छेदः[६], सप्तनवतिश्लोकयुक्तः एकोनविंशः परिच्छेदः[७], चतुःपञ्चाशच्छ्लोकात्मकः एकविंशः परिच्छेदः[८] शार्दूलविक्रीडितवृत्तश्लोकैः परिसमाप्यन्ते। तथा एकविंशे परिच्छेदे एकपञ्चाशः श्लोकोऽपि[९] शार्दूलविक्रीडिते निबद्धोऽस्ति। अस्य लक्षणं तावत् -

---

१. सर्वेषु वर्णाश्रमसंगतेषु। (VII.67)
२. शिवात्मबोधैकरतः स्थिराशयः। (XIII-37)
३. इत्युक्त्वा परमेश्वरः स भगवान् भद्रासनादुत्थितो। (III-88)
४. नित्यानित्यविवेकिनः सुकृतिनः शुद्धाशयस्यात्मनो।(V.77)
५. नित्ये निर्मलभावने निरुपमे निर्धूतविश्वभ्रमे । (XV.71)
६. मुक्तः संशयपाशतः स्थिरमना बोधे च मुक्तिप्रदे। (XVII.86)
७. नित्ये निर्मलसत्त्वयोगिषु परे निर्वासने निष्कले। (XIX.97)
८. श्रीवेदागमवीरशैवसरणिं श्रीषट्स्थलोद्यन्मणिम्। (XXI.54)
९. इत्युक्ते गणनायकेन सहसा लिङ्गात्ततः शाङ्कराद्। (XXI. 51)



**सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम् ।**
(III.19.2)इति।

अर्थात् यत्र मगणः-सगमः- जगणः- सगणः- तगणद्वयं एको गुरुः च वर्तन्ते तत्र शार्दूलविक्रीडितं वृत्तं भवति । तत्र एकैकस्मिन्नपि पादे एकोनविंशतिवर्णाः भवन्ति। तत्र (सूर्य) द्वादशाक्षरस्थाने तथा (अश्व) सप्तमाक्षरस्थाने यतिः भवेदिति नियमः।

चतुःपञ्चाशत् श्लोकात्मकस्य चतुर्थपरिछेदस्य अन्तिमश्लोकः[१] वसन्ततिलकावृत्ते समायोजितः वर्तते। तस्य लक्षणमेवं प्रतिपादयति **वृत्तरत्नाकर** :-

**'उक्ता वसन्ततिलका तभजा जगौ गः'**(III.14.4.) इति।

अर्थात् तगणः-भगणः-जगणद्वयं-गुरुद्वयेन च युक्तं (आहत्यचतर्दुशवर्णात्मकं) वृत्तं वसन्ततिलका भवति इति भावः। काश्यपमुनिना इदमेव वृत्तं सिंहोन्नतेति नाम्ना गदितमिति श्रूयते।

चतुर्नवतिश्लोकमयः नवमपरिच्छेदः[२] सप्तसप्ततिश्लोकपूर्णः दशमपरिच्छेदः[३], अष्टाचत्वारिंशत् श्लोकमयः द्वादशपरिच्छेदः[४], चतुश्चत्वारिंशत् श्लोकसमेतः चतुर्दशपरिच्छेदः[५],

---

१. उक्त्वा भवान् सकललोकमहोपकारम्। (IV.54)
२. उक्ताखिलाचारपरायणोऽसौ। (IX.94)
३. अन्यत्र शंभोरतिमात्रशून्यो। (X.77)
४. यः प्राणलिङ्गार्चनभावपूर्वैः। (XII.48)
५. भक्तादिधामार्पित धर्मयोगात्। (XIV.44)

इन्द्रवज्राछन्दसि निबद्धैः श्लोकैः परिसमाप्यन्ते। सप्तमपरिच्छेदस्य षट्षष्ठितमः श्लोकः[१] , सप्ताशीतिश्लोकसमेते विंशतितमे परिच्छेदे एकसप्ततिसंख्याश्लोकः[२], अस्मिन्नेव वृत्ते स्तः। इन्द्रवज्रायाः लक्षणमेवं निरूपयति **वृत्तरत्नाकरः-**

**स्यादिन्द्रवज्रा यदि तौ जगौ गः।** (III.11.3) इति।

तगणद्वयेन एकेन जगणेन तथा गुरुद्वयेन संयुक्तं वृत्तं इन्द्रवज्रा इति संलक्षितं वर्तते।

तदनन्तरं सप्तसप्ततिश्लोकात्मकः एकादशपरिच्छेदः[३], तथा षट्सप्ततिश्लोकात्मकः अष्टादशपरिच्छेदः[४] उपेन्द्रवज्रावृत्ते निबद्धाभ्यां श्लोकाभ्यां परिसमाप्येते। उपेन्द्रवज्रावृत्तमेवं संलक्षितं वर्तते **वृत्तरत्नाकरे-**

**'उपेन्द्रवज्रा जतजास्ततो गौ'**(III. 11.4) इति।

जगण-तगण-जगणैः सह गुरुद्वयं यत्र संयोजितं वर्तते तत्र उपेन्द्रवज्रा इति निश्चयः।

चतुरशीतिश्लोकपूर्णस्य षोडशपरिच्छेदस्य अन्तिमः श्लोकः[५] तथा एकविंशे परिच्छेदे चतुःपञ्चाशः श्लोकोऽपि[६] शालिनी वृत्ते

१. नित्यानि काम्यानि निमित्तजानि (VII.66)
२. एतावदुक्त्वा परमप्रबोधम्। (XX.72)
३. शिवप्रसादे सति योगभाजि। (XI.77)
४. न कर्मबन्धे न तपो विशेषे। (XVIII.76)
५. शुद्धाचारो शुद्धभावो विवेकी। (XVI.84)
६. लीने तस्मिन् शाङ्करे स्वप्रकाशे। (XXI.53)



विराजतः। वृत्तस्यास्य लक्षणमेवमस्ति **वृत्तरत्नाकरे-**

**शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः** (III. 11.7)इति।

अर्थात् मगणेन तगणद्वयेन गुरुद्वयेन च संयुतं वृत्तं शालिनी इति। तथैव क्रमेण चतुर्भिः (अब्धि) सप्तभिः (लोक) वर्णैः यतिः स्यादिति ज्ञातव्यम्।

तथैव अन्तिमे एकविंशतितमे परिच्छेदे त्रिपञ्चाशः श्लोकः[१] प्रसिद्धे मन्दाक्रान्तावृत्ते संयोजितः। तस्य लक्षणमेवं प्रत्यपादि **वृत्तरत्नाकरे**

**मन्दाक्रान्ता जलधिषडगैम्भौंनतौ ताद्गुरू चेत्।** (III.17.5) इति। सप्तदशवर्णात्मकं इदं वृत्तं मगणेन, भगणेन, नगणेन, तगणद्वयेन तथा गुरुद्वयेन च युक्तं इति नियमः। तथैव चतुर्थः, (जलधिः) षष्ठः, सप्तमश्च (अग)वर्णाः (4 + 6 + 7) यतिस्थानानि भवन्ति ।

एवं पञ्चनवत्युत्तरत्रयोदशशतश्लोक(1395)परिमितोऽयं सिद्धान्तशिखामणिः एकविंशति परिच्छेदेषु संग्रथिता वर्तते। ग्रन्थः सर्वात्मना सुप्रसिद्धे अनुष्टुप्छन्दस्येव निर्मितः। तथाऽपि परिच्छेदानामन्ते पूर्वोक्तरीत्या विविधानि वृत्तानि प्रयुक्तानि। विंशतितमे परिच्छेदे प्रतिपिपादयिषितस्य सिद्धान्तस्य परिसमाप्तिं मनसि निधाय द्विसप्ततितमं श्लोकं[२] इन्द्रवज्रावृत्ते संग्रथ्य, अवशिष्टं परिच्छेदं अनुष्टप्छन्दसा पूरयति ग्रन्थकर्ता। एवं

१. श्रुत्वा लिङ्गाद्वचनमुदितं शांकरं सानुकम्पम्। (XXI.52)

महाकाव्यलक्षणानुसारं सर्वत्र परिच्छेदान्ते वृत्तवैविध्यं दृश्यते। एकविंशे परिच्छेदे अर्थात् अन्तिमे परिच्छेदे परिच्छेदस्यान्ते चत्वारः श्लोकाः (शार्दूले द्वौ, मन्दाक्रान्तायां एकः, इन्द्रवज्रायां एकः) विविधवृत्तेषु निबद्धाः सन्ति।

कविः कवितानिर्माणे छन्दसां प्रोयगे च निपुणः इति अस्य ग्रन्थस्य अवलोकनेन ज्ञायते। कुत्रापि कविताधारायां कुण्ठितत्त्वं नास्ति। शास्त्रीयसिद्धान्तपरानपि गाढान् गूढानपि अंशान् एतद्ग्रन्थकर्ता सुलभसुन्दरया शैल्या सुव्यक्तान् करोति।

अस्य कवेः जीवनकाले यद्यपि प्रान्तीयभाषाः बहुलप्राचरे आसन् तथापि राजास्थानेषु अधिकारभाषारूपेण गीर्वाणवाण्येव आदृता। पण्डितानां गोष्ठीषु संस्कृतमेव समाश्रितम्। अत एव मतप्रवक्तारः गुरवः सिद्धान्तकर्तारः पण्डिताश्च संस्कृतभाषायामेव पठनं श्रवणं पाठनं ग्रन्थकरणं वादोपवादनिर्वहणं इत्यादीनि निर्वर्तयामासुः। विशिष्य मतविषयास्सर्वेऽपि तस्मिन् काले स्थितैर्वा तत्पूर्वजैर्वा ग्रन्थकर्तृभिः संस्कृतेनैव वचसा प्रतिपादिताः।

तत्रापि गद्यपद्यप्रक्रिययोः का प्रक्रियाऽनुसरणीया इति प्रश्ने जाते पद्यस्य यथा सुलभतया व्याप्तिर्भवति न तथा गद्यस्य इति मत्वा पद्यमार्गेणैव विविधानि छन्दांसि प्रयुज्य ग्रन्थनिर्माणं चक्रुः।

* * *

## ९. नायकविचारः नाटकीयता च

यस्य कस्यापि प्रबन्धस्य प्रतिष्ठा तन्नायकगुणनिरूपणमूला भवति। तदुक्तमालङ्कारिकैः -

**'प्रबन्धानां प्रबन्धॄणामपि कीर्तिप्रतिष्ठयोः।**
**मूलं विषयभूतस्य नेतुर्गुणनिरूपणम् ॥'** इति।

अत्र सिद्धान्तशिखामणौ शिवतत्त्वं प्रतिपाद्यं वस्तु। तस्य वस्तुनः प्रतिपादकः गुरुः रेणुकाचार्यः। 'गुरुर्देवो महेश्वरः' इति वचनानुसारेण तत्त्वबोधको गुरुः महेश्वर एव भवतीति संप्रदायः। विशिष्य शिवतत्त्वं सर्वमपि गुरुपरम्पराप्राप्तमेव भवति। तत एव गुरवः एवं परिकीर्तिताः-

**वन्दे गुरूणां चरणारविन्दे सन्दर्शितस्वात्मसुखावबोधे।**
**जनस्य ये जाङ्गलिकायमाने संसारहालाहलमोहशान्त्यै॥**इति॥

अतश्च शिवचरणारविन्दवत् गुरुचरणारविन्देऽपि वन्दनीये भवतः। जिज्ञासुः अगस्त्यः स्वसमीपमागतं रेणुकाचार्यं विधिवत्संपूज्य एवं प्रार्थयति-

**भवादृशानां सिद्धानां प्रबोधध्वस्तजन्मनाम् ।**
**प्रवृत्तिरीदृशी लोके परानुग्रहकारिणी ॥** (IV.51)

**त्वन्मुखाच्छ्रोतुमिच्छामि सिद्धान्तं श्रुतिसम्मतम् ।**
**सर्वज्ञ वद मे साक्षात् शैवं सर्वार्थसाधकम् ॥** (IV.52)

एवमगस्त्यमुनिना संप्रार्थितः रेणुकाचार्यः तेन पृष्टं श्रुतिसम्मतसिद्धान्तं शिवतत्त्वप्रबोधकं महता प्रबन्धेन बोधयति।

अयं प्रबोधः पञ्चमपरिच्छेदादारभ्य विंशपरिच्छेदपर्यन्तं षोडश परिच्छेदेषु ग्रन्थेऽस्मिन् निरूपितोऽस्ति।

यदर्थमयं ग्रन्थः कविना शिवयोगि शिवाचार्येण आरब्धः स प्रबोधः अतिरमणीयया वचोभङ्ग्या अत्र निबद्धो दृश्यते। तथा च तत्त्वप्रतिपादकगुरुस्थाने स्थितः रेणुकाचार्यः ग्रन्थेऽस्मिन् अत्यन्तं प्रामुख्यं भजते इति कृत्वा तमेव अत्र प्रबन्धनायकं मन्यन्ते सुधियः। अलङ्कारग्रन्थेषु नायकस्य अनेके विशिष्टाः गुणाः निरूपिताः सन्ति। तादृशगुणाः सर्वेऽपि श्रीरेणुकाचार्ये सङ्घीभूय दृश्यन्ते। ग्रन्थकारेणैव ते विशिष्टगुणाः चतुर्थे परिच्छेदे एवं वर्णिताः -

**भस्मोद्धूलितसर्वाङ्गं साररुद्राक्षभूषणम् ।**
**लिङ्गधारणसंयुक्तं लिङ्गपूजापरायणम् ।**
**जटामुकुटसंयुक्तं त्रिपुण्ड्राङ्कितमस्तकम् ॥**

**कटीतटीपटीभूतकन्थापटलबन्धुरम् ।**
**दधानं योगदण्डं च भस्माधारं कमण्डलुम् ॥**

**शिवाद्वैतपरिज्ञानपरमानन्दमोदितम् ।**
**निर्धूतसर्वसंसारवासनादोषपञ्जरम् ॥**

**शिवागमसुधासिन्धुसमुन्मेषसुधाकरम् ।**
**चित्तारविन्दसंगूढशिवपादाम्बुजद्वयम् ॥**

**यमादियोगतन्त्रज्ञं स्वतन्त्रं सर्वकर्मसु ।**
**समस्तसिद्धसन्तानसमुदायशिखामणिम् ॥**



**वीरसिद्धान्तनिर्वाहकृतपट्टनिबन्धनम् ।**
**आलोकमात्रनिर्भिन्नसमस्तप्राणिपातकम् ॥**

(IV. 3 to 8)

अपि च तदनन्तरप्रस्तावे अचार्यः स्वयमेव एवं वदति-

**शिवादेशानुसारेण शिवलिङ्गादिहाभवम् ।**
**नाम्ना रेवणसिद्धोऽहं सिद्धसंताननायकः ॥** (IV.11)

अत्र नायकशब्दप्रयोगोऽपि तस्य प्रबन्धनायकत्वं द्योतयति। न केवलं अस्मिन् परिच्छेदे, परं तु द्वितीयपरिच्छेदेऽपि अयमाचार्यः षड्भिः श्लोकैः (II.28-34) दारुकेण सह उपवर्णितः। उभयत्र तस्य लोकोत्तरगुणाः प्रतिपादिताः सन्ति।

वेदान्तग्रन्थेषु तत्त्वप्रतिपादकानामाचार्याणामेव प्रथम पूजनीयता परमादरणीयता च विलोक्येते। अगस्त्योऽपि आचार्यं महता आदरेण स्तौति। ततश्च ग्रन्थेऽस्मिन् रेणुकाचार्य एव नायकस्थाने विराजते इत्यत्र संशयलेशोऽपि नास्ति।

अन्तिमे परिच्छेदेऽपि विभीषणः स्वनगरं प्राप्तं रेणुकाचार्यं विलोक्य भक्तिभरितः एवं स्तौति-

**मत्समो नास्ति लोकेषु भाग्यातिशयवत्तया।**
**यस्य गेहं स्वयं प्राप्तो भवान् साक्षान्महेश्वरः॥**

(XX1.11) इति।

तदनु विभीषणे अनुग्रहं प्रदर्शयन् तदभीष्टमनुसृत्य

अयमाचार्यः त्रिकोट्याचार्यरूपेण यथाशास्त्रं यथाविधि तत्क्षणे लिङ्गानां कोटित्रयं संस्थापितवान्। परतत्त्वप्रतिनिधित्वेन लिङ्गस्थापनं विधाय न केलवं विभीषणस्य परन्तु शिवभक्तिसम्पन्नानां सर्वेषामपि जनानां तारकोऽभूदयमाचार्यः। अपि च लिङ्गादुद्भूतः अयमाचार्यः अन्ततो गत्वा लिङ्गे एव प्रलीनो भवतीति तस्य अलौकिकं माहात्म्यं, अयोनिजत्वं अद्भुतावहत्वं च सुष्टु निरूपितानि।

अपि च शिवाज्ञया लोकेऽवतीर्णः रेणुकाचार्यः शिवेन निर्दिष्टं कार्यं सश्रद्धं निर्वर्तयामास। स्वावतारस्य समाप्तिकाले कृतकृत्यः अयमाचार्यः शिवेनाभिनन्दितश्च । तदुक्तं-

**इत्युक्ते गणनायकेन सहसा लिङ्गात्ततः शाङ्करात्**
**वत्सागच्छ महानुभाव भवतो भक्त्या प्रसन्नोऽस्म्यहम् ।**
**इत्युच्चैरगदद्वचस्तनुभृतामाश्चर्यमासीत् तदा**
**दिव्यो दुन्दुभिराननाद गगने पुष्पं ववर्षुर्गणाः ॥**

(XXI-52) इति

अनेन शिवतत्त्वप्रबोध एव रेणुकाचार्यस्यावतारप्रयोजन मिति तत्कार्यं सम्यक् तेन निर्व्यूढमिति च हेतोः प्रबन्धेऽस्मिन् अस्य माहात्म्यं प्राभवं च नितरां प्राधान्यं भजेते इति हेतोः अस्य शिवावतारस्वरूपस्य भागवतः रेणुकाचार्यस्य प्रबन्धनायकत्वं सम्यक् घटते ।

काव्येषु रसस्यैव प्राधान्यमिति जानीमः। तत्र भरतस्य नाट्यशास्त्रे श्रुङ्गारादयः **'अष्टौ नाट्ये रसाःस्मृताः'** इत्युक्तरीत्या



अष्टावेव रसाः परिकीर्तिताः। तदनु महाभारतादिग्रन्थपरिशीलनेन साहित्यशास्त्रकर्तारः **'शान्तोऽपि नवमो रसः'** इति शान्तस्यापि रसत्वं प्रतिष्ठापयामासुः। महाभारते शान्तरस एव प्राधान्यं भजते इति ध्वनिकारेण आनन्दवर्धनेन सप्रमाणं निरूपितमस्ति।

शान्तस्य शम एव स्थायिभावः। शमदमादिगुणसम्पन्न एव मोक्षार्हो भवति। एवं च शान्तरसानुभवस्य ब्रह्मानन्दरसानुभवस्य च ऐकात्म्यं दृश्यते। सिद्धान्तशिखामणौ बहुधा शिवतत्त्वं प्रतिपादितमस्ति। शिवतत्वप्राप्तिः निगृहीतेन्द्रियस्य शमदमादिगुणसम्पन्नस्यैव सुलभो भवति। तथा च अस्य ग्रन्थस्य काव्यत्वपरिशीलनसन्दर्भे नवरसेषु कस्य रसस्य प्राधान्यं इति शङ्कायां शान्तरसस्यैव प्राधान्यं इति निश्चप्रचं वक्तुं शक्यते। एवं काव्यस्यास्य वस्तु शिवपारम्यप्रतिपादनं, नायकस्तावत् प्रमथगणेश्वरः रेणुकाचार्यः, रसस्तु शान्तरसः इति काव्यहृदयत्वेन परिगणिताः 'वस्तुनेतृरसाः' सम्यगायोजिताः इति सिद्धं भवति।

## नाटकीयता

**'काव्येषु नाटकं रम्य'**मिति साहित्यवेत्तारः कथयन्ति। कवयः नाटकरचनाद्वारा स्वीयं प्रतिभातिशयं सम्यक् द्योतयन्ति। **'नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधन'**मिति कालिदासेन नाट्यस्य बहुजनाकर्षकत्वं निरूपितम्। श्रव्यकाव्येष्वपि कुत्रचित् नाटकप्रक्रियामवलम्ब्य कवयः नाटकशैलीं अनुसरन्ति । इयं पद्धतिः सिद्धान्तशिखामणिकर्त्राऽपि अनुसृता।

अत्र शिवभक्तेषु मर्यादामतीत्य प्रवृत्तस्य रेणुकस्य स्थितिं विलोक्य शिवः तमेवं भर्त्सयति शपति च-

**रे रे रेणुक! दुर्बुद्धे! कथमेष त्वयाऽधुना।**
**उल्लङ्घितः सभामध्ये मम भक्तो हि दारुकः॥** (III.69)

**लङ्घनं मम भक्तानां परमानर्थकारणम् ।**
**आयुः श्रियं कुलं कीर्तिं निहन्ति हि शरीरिणाम्॥**(III.70)

**अविचारेण मद्भक्तो लङ्घितो दारुकस्त्वया ।**
**एष त्वं रेणुकानेन जन्मवान् भव भूतले ॥** (III.77) इति।

अत्र शिववचनेषु नाटकीयत्वं स्पष्टं द्योत्यते। शापनिवृत्तिं कांक्षन् रेणुकः शिवं अनुगृह्णीष्वेतिति प्रार्थयति। तत्र अन्ततो गत्वा शापः लोकक्षेमविधायको भविष्यतीति तं सान्त्वयति। अत्र प्रवृत्ते संवादे तत्त्वप्रतिपादनं सरसया सरलया च पद्धत्या ग्रन्थकर्त्रा निर्व्यूढम्।

* * *



# १०.शैलीसौलभ्यं पदानुपूर्वी च

साधारणतया सर्वैरपि मतैः प्रतिपाद्यमानं तत्त्वं सामान्यजनानां दुरवगाहं भवति। नैषधादिकाव्यान्यपि व्याख्यानं विना दुर्बोधानि भवन्ति, किमुत तत्त्वप्रतिपादकरचनाविषयः। वेदान्तेषु प्रस्थानत्रयेऽन्यतमत्वेन परिगण्यमानानि ब्रह्मसूत्राणि अत्यन्तं क्लिष्टानि भवन्ति। तत एव तेषां विपुलानि व्याख्यानानि आवश्यकानि बभूवुः। मतत्रयाचार्यैरपि गीताब्रह्मसूत्रादिग्रन्थानां स्वस्वमतसिद्धान्तप्रतिपादनपूर्वकं भाष्याणि विरचितानि सन्ति।

यद्यपि सिद्धान्तशिखामणौ शक्तिविशिष्टाद्वैततत्त्वं प्रतिपाद्यत्वेन स्वीकृतं, तथाऽपि ग्रन्थकर्त्रा तत्र यथा दुर्बोधोऽपि विषयः सुबोधो भवति तथा पद्यरचना निर्व्यूढा। उदाहरणार्थं दशमपरिच्छेदे सर्वाद्वैतनिरसनप्रकरणे अद्वैतमतनिरसनं कुर्वन् शिवयोगिशिवाचार्यः एवमुवाच -

**पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।**
**पूजाकर्माद्यसंपत्तेः लिङ्गनिष्ठाविरोधतः॥** (X.37)

**सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थितेः।**
**भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः॥** (X.38)

**प्रेरकं शंकरं बुद्ध्वा प्रेर्यमात्मानमेव च ।**
**भेदात्तं पूजयेन्नित्यं न चाद्वैतपरो भवेत् ॥** (X.39)

**पतिः साक्षान्महादेवः पशुरेष तदाश्रयः।**

**अनयोः स्वामिभृत्यत्वं अभेदे कथमिष्यते ॥** (X.40)

**साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः।**

**तदाऽद्वैतसमापत्तिः ज्ञानहीनस्य न क्वचित् ॥** (X.41)

**भेदस्य कर्महेतुत्वात् व्यवहारःप्रवर्तते।**

**लिङ्गपूजादिकर्मस्थो न चाद्वैतं समाचरेत् ॥** (X.42)

**पूजादिव्यवहारःस्याद्भेदाश्रयतया सदा ।**

**लिङ्गपूजापरस्तस्मान्नाद्वैते निरतो भवेत् ॥**(X.43) इति।

एवं सिद्धान्तशिखामणिकर्ता लोकानुग्रहार्थं वागाडम्बरं विहाय क्लिष्ठानपि विषयान् सुलभसुन्दरतया शैल्या निरूपयामास। अत्र हृदयावर्जककाव्यनिर्माणशैली पठितॄन् आकर्षति। तान् विषयप्रवणान् करोति। अमन्दमानन्दं च जनयति।

आलङ्कारिकाः विशिष्टां पदानां आनुपूर्वीं काव्यनिर्माणे बहु उपकरोतीति श्लाघन्ते। उक्तं च काव्यालङ्कारकर्त्रा वामनेन-

**‘किन्त्वस्ति काचिदपरैव पदानुपूर्वी**

**यस्यां न किंचिदपि किंचिदिवावभाति’** इति।

अर्थात् समुचितानां परिवृत्त्यसहिष्णूनां पदानां काव्यनिर्माणे प्रयोगः पठितृणां श्रोतृणां च कमपि अनिर्वचनीयमानन्दं जनयति। उदाहरणार्थं पश्यत -



**रे रे रेणुक! दुर्बुद्धे! कथमेष त्वयाऽधुना।**

**उल्लङ्घितः सभामध्ये मम भक्तो हि दारुकः ॥**(III. 69)

**लङ्घनं मम भक्तानां परमानर्थकारणम् ।**

**आयुःश्रियं कुलं कीर्तिं निहन्ति हि शरीरिणाम् ॥**

(III.70)

**मम भक्तमवज्ञाय मार्कण्डेयं पुरा यमः।**

**मत्पादताडनादासीत् स्मरणीयकलेबरः॥** (III.71)

इत्यादि। एतानि वचनानि रेणुकमुद्दिश्य शंकरेण प्रोक्तानि। अत्र पदप्रयोगः पदान्तरैः परिवृत्तिं न सहते। अपि च कथानिर्वहणे शिवस्य वचनानि नाटकप्रक्रियां अनुसरन्ति। ईदृशी प्रक्रिया सहृदयहृदयावर्जिका भवति। अत्र मार्कण्डेयादीनां प्रस्तावः पुराणकथानां प्रसक्तिमुपस्थापयति। ‘इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्’ इति महतां वचनं प्रसिद्धमेव। तथा च पुराणकथां उदाहृत्य अत्र शंकरः दुर्बुद्धिं रेणुकं सुबुद्धिं कर्तुं तद्द्वारा वीरशैवमतप्रचारं साधयितुं प्रयततेस्म।

एवं परिशीलने कृते सिद्धान्तशिखामणिः तत्त्वप्रतिपादनपरोऽपि काव्यलक्षणलक्षितः सन् **एकं दार्शनिकं काव्य**मिति निस्संशयं वक्तुं शक्यते।

* * *